The origin of the folk-songs that are current all over the country can be traced to Vedic hymns, especially those of the Wedding and similar other rituals. It is true that actual words of these folk-songs are not found in the Vedas, yet the similarity of diction and content in both is quite obvious. The rites and ceremonies in India are usually accompanied by romantic ditties. For example, the Wedding songs of the bride in the Punjab are called 'Suhāga' which contain wishes and prayers for good fortune longevity, progeny and happiness. There is an undeniable influence of the RV. X. 85 as well as of the AV. XIV, 1-2 on these songs. The G. Sūtras enjoin these hymns in such ceremonies. The ŚGS cites a traditional verse (1, 12, 6). 'As this has protected Indrānī, the beloved one and Aditi, the mother of the noble sons and Apālā who was free from widowhood may it thus here protect thee.'

The contexts containing the words 'Sumaṅgalī' and Saubhāgyam, and 'Mā Viyauṣṭam' have been variously improvised in their short and long versions by the folk musicologists. The ŚGS employs 27 mantras, KGS 23 mantras and AG 11 mantras in the Marriage ceremony which is still a living sacrement in the life of the country. The AV. gives a picturesque account of the Wedding ceremony, viz., 'The bridegroom set down a stone on the ground, asking the bride to step upon it for the obtainment of offspring. On the conclusion of the wedding festivities, the bride, anointed and in festal array, mounted with her husband a car adorned with red flowers and drawn by two white bulls. On this she was conducted in procession to her new home. The main features of this nuptial ceremony of three thousand years ago still survive in India'. Thus, the main events of marriage are decked out in practices often of great charm and usually full of symbolic meaning.' These songs recur with the most amazing correspondence in most of the peoples of all countries. Dr. Winternitz has made a study of the problem. 'Among the Indians, says he, 'of North America, among the Negro races of Africa, among the Malays and Mongols, among the ancient Greeks and Romans, and frequently still among the peasantry of present-day Europe, we find again exactly the same views, exactly the same strange leaps of thought in the magic songs and magic rites, as have come down to us in the AV. of the ancient Indians. There are, then, numerous verses in the AV., which, according to their character and often also their contents, differ just as little from the magic formulas of the American-Indian medicine-men and Tartar shamans, as from the Merseburg magic

maxims, which belong to the sparse remains of the oldest German poetry. Thus we read, for example, in one of the Merseburg magic incantations that "Wodan, who well understood it", charmed the sprained leg of Balder's foal with the formula :

"Bone to bone,
Blood to blood,
Limb to limbs,
As if they were glued."

And quite similarly it is said in AV. IV, 12, 4; 5 in a spell against the breaking of a leg :

"Let marrow close with marrow,
Let skin grow united with the skin,
Let blood and bone grow strong in thee,
Flesh grow together with the flesh.
Join thou together hair with hair,
Join thou together skin with skin,
Let blood and bone grow strong in thee.
Unite the broken part, O Plant."

The great importance of the AV. Saṁhitā lies in the fact that it is an invaluable source of knowledge of the real popular beliefs as yet uninfluenced by the priestly religion, of the faith in numberless spirits, imps, ghosts, and demons of every kind, and of the witchcraft, so eminently important for ethnology and for the history of religion.'

The Gṛhya sūtras have come down to us with a fidelity that has no parallel in the literary history of the world and it is for this reason that a study of these sūtras is of great significance in reassessing the past.

## ॥ अथ आवसथ्याधानम् ॥

अथातः पाकयज्ञान् व्याख्यास्यामः ॥१॥ अभिसमावर्त्स्यमानो यत्रान्त्यां समिधमभ्यादध्यात् तमग्निमिन्धीत ॥२॥ वैवाह्य[1] वा ॥३॥ दायाद्यकाल एके ॥४॥ प्रेते वा गृहपतौ स्वयं ज्यायान् ॥५॥ वैशाख्याममावास्यायामन्यस्यां वा ॥६॥ कामतो नक्षत्र एके ॥७॥ पुरुपशुविट्कुलाम्बरीष[2]-बहु[3]याजिनामन्यतमस्मादग्निमिन्धीत ॥८॥ सायंप्रातरेके ॥९॥ सायमाहुतिसंस्कारोऽध्वर्युप्रत्यय इत्याचार्याः ॥१०॥ प्रातः पूर्णाहुतिं जुहुयाद्वैष्णव्यर्चा तूष्णीं वा ॥११॥ तस्य प्रादुष्करणहवनकालावग्निहोत्रेण व्याख्यातौ[4] ॥१२॥ यज्ञोपवीतीत्यादि च सम्भवत्सर्वं कल्पैकत्वात्[5] ॥१३॥ तदप्याहुः ॥१४॥

पाकसंस्था[6] हविःसंस्थाः सोमसंस्थास्तथापराः ।
एकविंशतिरित्येता यज्ञसंस्थाः प्रकीर्तिताः ॥१५॥

इति प्रथमः[7] खण्डः ।

## ॥ अथ ब्राह्मणभोजनम् ॥

कर्मापवर्गे ब्राह्मणभोजनम् ॥१॥ वाग्रूपवयः श्रुतशीलवृत्तानि गुणाः ॥२॥ श्रुतं तु सर्वानत्येति ॥३॥ न श्रुतमतीयात् ॥४॥

---

1. तु. पागृ १, २, ३; आश्रौ २, २, १ 2. BMS. कन्नाम्बरीष० 3. OMS. बहुपशु० 4. तु. शांश्रौ २, ६, २ 5. शांश्रौ १, १, ६-७ 6. तु. ऋसं १०, १२४, १; शौसं १, १, १; गोब्रा १, ५, २३. RL. art. ८ 7. मूलकोषेषु सर्वत्र खण्डसमाप्तिनिर्देशात्मको लेखो नास्ति 8. तु. मैसं ४, ८, १; कपिसं ४६, ५; काठसं ३०, १ ।

अधिदैवमथाध्यात्ममधियज्ञमिति त्रयम् ।
मन्त्रेषु ब्राह्मणे चैव श्रुतमित्यभिधीयते ॥५॥
क्रियावन्तमधीयानं श्रुतवृद्धं तपस्विनम् ।
भोजयेत्[1] तं सकृद्यस्तु न तं भूयः क्षुदश्नुते ॥६॥
यां तितर्पयिषेत् काञ्चिद्देवतां सर्वकर्मसु ।
तस्या उद्दिश्य मनसा दद्यादेवंविधाय वै ॥७॥
नैवंविधे हविर्न्यस्तं न गच्छेद्देवतां क्वचित् ।
निधिरेष मनुष्याणां देवानां पात्रमुच्यते ॥८॥

इति द्वितीयः खण्डः ।

## ॥ अथ दर्शपूर्णमासौ ॥

अथ दर्शपूर्णमासा[2] उपोष्य ॥१॥ प्रातर्यग्रैतन्महाद्वत्ताऽग्राणि सूर्य आतपति स होमकालः स्वस्त्ययनतमः सर्वासामाहुतामन्यत्र[3] निर्देशात् ॥२॥ सुमनाः शुचिः शुचौ वरूथ्यदेशे पूर्णविधनं[4] चरु' श्रपयित्वा दर्शपूर्णमास-देवताभ्यो यथाविभागं स्थालीपाकस्य जुहोति ॥३॥ स्थालीपाकेषु[5] च ग्रहणा-सादनप्रोक्षणानि मन्त्रदेवताभ्यः ॥४॥ अवदानधर्माश्च[6] ॥५॥ पूर्वं[7] तु दर्श-पूर्णमासाभ्यामन्वारम्भणीयदेवताभ्यो जुहुयात् ॥६॥ आ पौर्णमासाद्दर्श[8]-स्यानतीतः कालः, आ दर्शात्पौर्णमासस्य ॥७॥ प्रातराहुतिं चैके सायमा-हुतिकालेऽत्ययान्मन्यन्ते ॥८॥ नियतस्त्वेव कालोऽग्निहोत्रे प्रायश्चित्त-दर्शनाद् भिन्नकालस्य ॥९॥ नित्याहुत्योर्व्रीहियवतण्डुलानामन्यतमद्धविः[9] कुर्वीत ॥१०॥ अभावेऽन्यदप्रतिषिद्धम् ॥११॥ तण्डुलाँश्चेत् प्रक्षाल्यैके ॥१२॥

---

1. OMS. भाजयेन 2. पूर्णद्वयमर्धीयन. OEN. द्व 3. PMS. ०मायवृता० 4. BMS. पूर्णविधानम्, मनंत्र के षेषु MW. BW. प्रभृतिषु शोधापेक्षमिदम्. 5. तु. OEN 6. तु. WIS १०, ६५; NVM. P. १२२ 7. तु. WIS १०, ३३०; NVM. P. १८५ 8. OMS. पूर्णमासात् 9. BMS. तन्डुलानाम् ।

इतरेषामसंस्कारः ॥१३॥ सायमग्नये प्रातस्सूर्याय ॥१४॥ प्रजापतये चानूभयो-स्तूष्णीम् ॥१५॥ प्राक् प्रागाहुतेः समिधमेके ॥१६॥ यथोक्तं पर्युक्षणम् ॥१७॥

इति तृतीयः खण्डः ।

## ॥ अथ स्वाध्यायविधिः ॥

उत्थाय[1] प्रातराचम्याहरहः स्वाध्यायमधीयीत ॥१॥ "अ[1]द्या[2] नो देव सवितरिति" द्वे, "अपेहि[4] मनसस्पत इति" सूक्तम्, "ऋतं[5] च सत्यं चेति" सूक्तम्, "आदित्या[6] अव हि ख्यतेति" सूक्तशेषः, "इन्द्र[7] श्रेष्ठानीति" एका, "हंसः[8] शुचिषदिति" एका, "नमो[9] महद्भ्य इति" एका, "यत[10] इन्द्र भयामह इति" एका, "अघ[11] स्वप्नस्येति" एका, "यो मे राजन्निति[12]" एका, "ममाग्ने[13] वर्च इति" सूक्तम्, "स्वस्ति [14] नो मिमीतामिति च पञ्च ॥२॥

इति चतुर्थः खण्डः ।

## ॥ अथ कन्यालक्षणानि ॥

चत्वारः[15] पाकयज्ञा हुतोऽहुतः प्रहुतः प्राशित इति ॥१॥ पञ्चसु बहिःशालायां विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयन इति ॥२॥

1. तु. OEN 2. अत्र कौब्रा २०, ७; गोगृ ३. ३, ३२ 3. ऋसं ५, ८२, ४-५; ऐब्रा ४, ३०, ३; कौब्रा १९, ६; शांश्रौ ८, ३, ८; आश्रौ ६, २३, १; आगृ ३, ६, ५ 4. ऋसं १०, १६४, शौसं २०, ९६, २३; ऋवि ४, २०, १; तु. बृदे ८, ६७ 5. ऋसं १०, १९०, तैआ १०, १, १३; बौध ४, ४, २ 6. ऋसं ८, ४७, ११-१८ 7. ऋसं २, २१, ६; आगृ १, ७५, ३; पागृ १, १८, ६; बृदे ४, ७४ 8. ऋसं ४, ४०, ५; मैसं २, ६, १२; काठसं १५, ८; आश्रौ ८, २, १४; तैसं १, ८, १५, २, 9. ऋसं १, २७, १३; ऐब्रा ७, १६, ८; शांश्रौ १, ६, १३; बृदे ३. ९९ 10. ऋसं ८, ६१, १३; शौसं १९, १५, १, शांश्रौ ६, १३, ३; आश्रौ ३, १२, १ 11. ऋसं १, १२०, १२; ऋवि १ २५, १ 12. ऋसं २, २८, १०, मैसं ४, १४, ९; ऋवि १, ३०, १; बृदे ४, ८३; आगृ ३, ६, ६ 13. ऋसं १०, १२८; शौसं ५, ३, १; आगृ ३, ६, २, 14. ऋसं ५, ५१, ११; आश्रौ ८, १, २३; आगृ २, १५, ६ 15 अष्टानि पञ्च-स्वपि पागृ १, ४, १-२ पठितानि च दर्शनीयानि तुलनार्थं द्रष्टव्यानीति OEN. द्र.।

उपलिप्त[1] उद्धतावोक्षितेऽग्निं[2] प्रणीय ॥३॥ निर्मथ्यैके विवाहे ॥४॥ उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्यै पाणिं गृह्णीयात् ॥५॥ या लक्षणसंपन्ना स्यात् ॥६॥ यस्या अम्यात्मम‌ङ्गानि स्युः ॥७॥ समाः केशान्ताः ॥८॥ आवर्तावपि[3] यस्यै स्यातां प्रदक्षिणौ ग्रीवायाम् ॥९॥ षड् वीराञ्जनयिष्यतीति विद्यात् ॥१०॥

इति पञ्चमः खण्डः।

## ॥ अथ कन्यावरणम् ॥

जायामुपग्रहीष्यमाणोऽनृक्षरा[4] इति वरकान् गच्छतोऽनुमन्त्रयते[5]॥१॥ अभिगमने पुष्पफलयवानादायोदकुम्भञ्च ॥२॥ "अयमहं[6] भो३ इति त्रिः प्रोच्य ॥३॥ उदिते प्राङ्मुखा गृह्याः प्रत्यङ्मुखा आवहमाना गोत्रनामान्य-[7]नुकीर्तयन्तः कन्यां वरयन्ति ॥४॥ उभयतो[8] रुचिते पूर्णपात्रीमभिमृशन्ति पुष्पाक्षतयवहिरण्यमिश्राम्—

"अना[9]धृष्टमस्यानाधृष्यं देवानामोजो[10]ऽनभिशस्त्यभिशस्तिपा अनभिशस्तेन्यम् "अञ्जसा[11] सत्यमुप गेषम्[12] "सुविते[13] मा धा[14] इति" ॥५॥ "आ नः[15] प्रजामिति[16]" त्वयि कन्याया आचार्य उत्थाय मूर्धनि करोति "प्रजां[17] त्वयि दधामि, पशूँस्त्वयि[10]दधामि, तेजो[17]ब्रह्मवर्चसं त्वयि दधामीति" ॥६॥

इति षष्ठः खण्ड.।

1. BMS. अथमलिप्त० 2. BMS. उद्धृता० 3. तु. OGN 4. ऋमं १०, ८५, २३; वागृ १०, ७ 5. BMS. गच्छतो 6. OMS. असौ अहम् 7. OMS. गोत्र० 8. BMS. उभयतो 9. माश्रौ ४, ५, ३; राश्रौ ५, ८, २ 10. भोजोऽभिशस्तिपा अनभिशस्तेन्यम् मैमं १, २, ७; काम २, ८; तैमं १, २, १०, २; गोमा २, २, ३ 11. मामं ५, ५; तैस १, २, १०, २; गोमा २, २, ३ 12. उपागाम् मैम १, ३, ७, काम २, ८; उपगेयम् पाम ३, १, ८६ 13. खिने मासं ५, ५; गोमा २, २, ३; शमा ३, ४, २, १४; आश्रौ ४, ५, ३; कैश्रौ १३, १८ 14. तैम १, २, १०, २; कामं २, ८; मैसं १, २, ७; लाश्रौ ५, ६, ६ 15. बाम् शौमं १४, २, ४० 16. ऋमं १०, ८५, ४३; कामं ११, १५; विष ८, ७० 17. स्वरास्तीया श्रुतिः।

## ॥ अथ प्रतिश्रुते होमः ॥

प्रतिश्रुते जुहोति ॥१॥ चतुरस्रं[1] गोमयेन स्थण्डिलमुपलिप्य ॥२॥ पूर्वयोर्व्विदिशोर्दक्षिणां प्राचीं पित्र्ये ॥३॥ उत्तरां दैवे ॥४॥ प्राचीमेवैके ॥५॥ उदक्संस्थां मध्ये लेखां लिखित्वा ॥६॥ तस्यै दक्षिणत उपरिष्टादूर्ध्वा-मेकां मध्य एकामुत्तरत एकाम् ॥७॥ ता अभ्युक्ष्य ॥८॥

"अग्निं[2] प्रणयामि[3] मनसा शिवेनाऽयमस्तु[2] सङ्गमनो वसूनाम्।
मा[4] नो हिंसीः स्थविरं मा कुमारं, शन्नो[4] भव द्विपदे शं चतुष्पदे"

इत्यग्निं[5] प्रणीय ॥९॥ तूष्णीं वा ॥१०॥ प्रदक्षिणमग्नेः समन्तात्पाणिना सोदकेन त्रिः प्रमार्ष्टि तत्समूहनमित्याचक्षते ॥११॥ सकृदपसव्यं पित्र्ये ॥१२॥

इति सप्तमः खण्डः।

## ॥ अथ परिस्तरणम् ॥

अथ परिस्तरणम् ॥१॥ प्रागग्रैः कुशैः परिस्तृणाति त्रिवृत् पञ्चवृद्वा ॥२॥ पुरस्तात् प्रथममथ पश्चाद् अथ पश्चात् ॥३॥ मूलान्यग्रैः प्रच्छादयति ॥४॥ सर्वाश्चावृतो दक्षिणतःप्रवृत्तय उदक्संस्था भवन्ति ॥५॥ दक्षिणतो ब्रह्माणं प्रतिष्ठाप्य "भूर्भुवः[6] स्वरिति" ॥६॥ सुमनोभिरलंकृत्य ॥७॥ उत्तरतः प्रणीताः प्रणीय "को वः[7] प्रणयती"ति ॥८॥ सव्येन कुशानादाय दक्षिणेनाप-नौति ॥९॥ दक्षिणं जान्वाच्य ॥१०॥ सव्यं पित्र्ये ॥११॥ नाज्याहुतिषु नित्यं परिस्तरणम् ॥१२॥ नित्याहुतिषु चेति माण्डूकेयः ॥१३॥ कुशतरुणे अविषमे अविच्छिन्नाग्रे अनन्तर्गर्भे प्रादेशेन मापयित्वा कुशेन छिनत्ति "पवित्रे[8] स्थ इति" ॥१४॥ द्वे त्रीणि वा भवन्ति ॥१५॥ प्रागग्रे धारयन्

1. OMS. चतुरस्रन् 2. स्वरान्तोऽयं मन्त्रपाठः 3. BMS. प्रणीयमिमनना 4. तु. शौनं ११, २, २० 5. चर्मं ७, ५४, ६; १०, ८५, ४३; ४४; शौनं १४, २, ४०; तु. GSP. १. ६४-६६ 6. तु. E शाङ्ख १, १, २२ 7. मनं ३, ३७; वाजुषी श्रुतिः 8. वाजुस्मृती श्रुतिः तु. काण्वी १, १६, ८; काठी १, १८, ६; काठी २, ४, ६; हिमौ १, ४, ५४ ९. मनं १, १२

"वैष्णव्याविति"[1] अभ्युक्ष्य[2] ॥१६॥ कुशतरुणाभ्यां प्रदक्षिणमग्निं त्रिः पर्युक्ष्य ॥१७॥ "महीनां[3] पयोऽसीति" आज्यस्थालीमादाय॥१८॥"इषे[4] त्वेति" अधिश्रित्य ॥१९॥ "ऊर्जे[5] त्वेति" उदगुद्वास्य ॥२०॥ उदगग्रे पवित्रे धारयन्नङ्गुष्ठाभ्यां चोपकनिष्ठिकाभ्यां चोभयतः प्रतिगृह्योर्ध्वाग्रे प्रह्वे कृत्वाज्ये प्रत्यस्यति।

"सवितुष्ट्वा[6] प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति"[7] ॥२१॥ आज्यसंस्कारः सर्वत्र ॥२२॥ नासंस्कृतेन जुहुयात् ॥२३॥ स्रुवे चापः "सवितुर्व[8] इति" ॥२४॥ ताः प्रणीताः प्रोक्षणीश्च ॥२५॥

इत्यष्टमः खण्डः।

## ॥ अथ आज्यहोमः ॥

स्रुवः पात्रम् ॥१॥ अर्थलक्षणग्रहणम् ॥२॥ सव्येन कुशानादाय दक्षिणेन मूले स्रुवं "विष्णो[9] हस्तोऽसीति[10]"॥३॥ स्रुवेणाज्याहुतीर्जुहोति ॥४॥ उत्तरपश्चार्धादग्नेरारभ्याविच्छिन्नं दक्षिणतो जुहोति "त्वमग्ने[11] प्रमतिरिति" ॥५॥ दक्षिणपश्चार्धादग्नेरारभ्याविच्छिन्नमुत्तरतो जुहोति "यस्येमे[12] हिमवन्त इति" ॥६॥ आग्नेयमुत्तरमाज्यभागं सौम्यं दक्षिणम्॥७॥ मध्येऽन्या[13] आहुतयः॥८॥"अग्निर्जनिता[14] स मेऽमूं जायां ददातु स्वाहा"॥ "सोमो[15] जनिमान्स माऽमुया जनिमन्तं करोतु स्वाहा"॥ "पूषा[16] ज्ञातिमानन्स माऽमुष्यै पित्रा मात्रा भ्रातृभिर्ज्ञातिमन्तं करोतु स्वाहेति"॥९॥ नाज्याहुतिषु[17] नित्यावाज्यभागौ स्विष्टकृच्च॥१०॥नित्याहुतिषु चेति माण्डूकेयः॥११॥महाव्याहृतिसर्वप्रायश्चित्त[18]

1. शाश्रौ १, ६, ३, ६; तैब्रा ३, ७, ४, ११; आपश्रौ १, ११, ७; गोगृ १, ७, २२; खागृ १, २, १२ 2. OMS. अभ्युक्षणम् 3. मासं ४, ३, तैसं १, २, १, १, काठसं २, १; शाश्रौ १, २, १, २२; माश्रौ २, १, १, ३५; काश्रौ ७, २, ३३ 4. मासं १, २२ 5. मासं १, ३० 6. आगृ १, ३, ३; सवितुस्त्वा......"पवित्रेण सूर्यस्य"...मासं १. ३१; शाश्रौ १, ३, १, २३ 7. इति शब्दान्तः सूत्रच्छेदो न तु भाष्यकारविभाजितो रश्मिपदान्तः तु. OEN 8 मासं १, १२ 9. तु. कौगृ ३, १० 10. BMS. कौगृ ८७, १०; मागृ १, १०, ८ 11. ऋसं १, ३१, १० 12. ऋसं १०, १२१, ४ 13. OMS. मध्या आहुतय 14. तु. 15. स्वराज्ञोया श्रुतिः तु. कागृ २५, ३१ 16. तु. कागृ २५, ३९ 17. तु. WIS ६. २१७ 18. OEN. तु. शाश्रौ १, १६, १-४; तु. GSP. २, ६-८।

प्राजापत्यान्तरमेतदावापस्थानम् ॥१२॥ आज्ये हविषि सव्ये पाणौ ये कुशास्तान् दक्षिणेनाग्रे संगृह्य मूले सव्येन तेषामग्रं स्रुवे समनक्ति मध्यमाज्यस्थाल्यां मूलं च॥१३॥ अथ चेत् स्थालीपाकेषु स्रुच्यग्रं मध्यं स्रुवे मूलमाज्यस्थाल्याम् ॥१४॥ ताननुप्रहृत्य "अग्नेर्वासोऽसीति"[1]॥१५॥ तिस्रः समिधोऽभ्याधाय ॥१६॥ यथोक्तं पर्युक्षणम् ॥१७॥ अनाम्नातमन्त्रास्वादिष्टदेवतासु "अमुष्यै[2] स्वाहाऽमुष्यै स्वाहेति" जुहुयात् स्वाहाकारेण शुद्धेन॥१८॥ व्याख्यातः[3] प्रतिश्रुते होमकल्पः ॥१९॥

इति नवमः खण्डः ।

## ॥ अथ पाकयज्ञभेदाः ॥

प्रकृतिर्भूतिकर्मणाम् ॥१॥ सर्वासां चाज्याहुतीनाम् ॥२॥ शाखापशूनाम् ॥३॥ चरुपाकयज्ञानां च ॥४॥ त एते प्रयाजा अननुयाजा अनिला[4] अनिगदा असामिधेनीकाश्च सर्वे पाकयज्ञा[5] भवन्ति॥५॥ तदपि श्लोकाः॥६॥

हुतोऽग्निहोत्रहोमेनाऽहुतो बलिकर्मणा ।
प्रहुतः पितृकर्मणा प्राशितो ब्राह्मणे हुतः ॥७॥
अनूर्ध्वज्ञुर्व्युब्जजानुर्जुहुयात् सर्वदा हविः ।
न हि बाह्यहुतं देवाः प्रतिगृह्णन्ति कर्हिचित् ॥८॥
रौद्रं तु राक्षसं पित्र्यमासुरं चाऽऽभिचारिकम् ।
उक्त्वा मन्त्रं स्पृशेदप आलभ्यात्मानमेव च ॥९॥

इति दशमः खण्डः ।

1. स्वशाखीया श्रुतिः 2. कौशा ४, १४ 3. दशमखण्डस्यादिमं सूत्रमिति OEN. 4. BMS. अनिडा 5. भूयसे विमर्शाय नु. NVM १४, १३४; WIS ६, २१७

## ॥ अथ इन्द्राणीकर्म[1] ॥

अथैतो रात्रीं श्वस्तृतीयां वा कन्यां वक्ष्यन्तीति ॥१॥ तस्यां रात्र्यामतीते निशाकाले सर्वौषधिफलोत्तमैः सुरभिमिश्रैः सशिरस्कां कन्यामाप्लाव्य ॥२॥ रक्तमहतं वा वासः परिधाय ॥३॥ पश्चादग्नेः कन्यामुपवेश्यान्वारब्धायां[2] महाव्याहृतिभिर्हुत्वाऽऽज्याहुतीर्जुहोति—

"अग्नये[3] सोमाय प्रजापतये मित्राय वरुणायेन्द्रायेन्द्राण्यै गन्धर्वाय
भगाय पूष्णे त्वष्ट्रे बृहस्पतये राज्ञे प्रत्यानीकायेति" ॥४॥

चतस्रोऽष्टौ वाऽविधवाः शाकपिण्डीभिः सुरयाऽन्नेन च तर्पयित्वा चतुर् आनर्तनं कुर्युः ॥५॥ एता एव देवताः पुंसः ॥६॥ वैश्रवणमीशानं च ॥७॥ अतो ब्राह्मणभोजनम् ॥८॥

इति एकादशः खण्डः ।

## ॥ अथ विवाहकर्म[1] ॥

स्नातं कृतमङ्गलं वरमविधवाः सुभगा युवत्यः कुमार्यं वेश्म प्रपादयन्ति ॥१॥ तासामप्रतिकूलः स्यादन्यत्राभक्ष्यपातकेभ्यः ॥२॥ ताभिरनुज्ञातोऽस्यै वासः प्रयच्छति "रैभ्यासीदिति[4]" ॥३॥ "चित्तिरा उपबर्हणमिति" आञ्जनकोशमादत्ते ॥४॥ "समञ्जन्तु[5] विश्वे देवा इति[6]" समञ्जनीया ॥५॥

"यथेयं[7] शची वावातां सुपुत्रां च यथाऽदितिम्।
अविधवां चापालामेवं त्वामिह रक्षतादिमामिति ॥"

1. WIS १, २२४ 2. स्वशार्येवा श्रुतिः 3. तु. OGN. 4. OMS. मूर्धन्येन 5. ऋसं १०, ८५, ६; शौसं १४, १, ७; तु. बृदे ७, १२३ 6. ऋसं १०, ८५, ७; शौसं १४, १, ६ 7. ऋसं १०, ८५, ४७; तु. आगृ १, ८, ६; पागृ १, ४, १४; आपम १, ११, ३, मागृसं १, ७, १५
8. तु. OEN

दक्षिणे पाणौ शललीं त्रिवृतं ददाति ॥६॥ "रूपं[1]-रूपमिति[2]" आदर्शं सव्ये ॥७॥ रक्तकृष्णमाविकं क्षौमं वा त्रिमणिं प्रतिसरं ज्ञातयोऽस्या बध्नन्ति "नीललोहितमिति[3]" ॥८॥ "मधुमतीरोषधीरिति" मधूकानि बध्नाति ॥९॥ विवाहे गामर्हयित्वा गृहेषु[4] गां ते माधुपर्किक्यौ ॥१०॥ पश्चादग्नेः 'कन्यामुपवेश्यान्वारब्धायां महाव्याहृतिभिस्तिस्रो जुहोति ॥११॥ समस्ताभिश्चतुर्थीं प्रतीयेतैतस्यां चोदनायाम् ॥१२॥ एवमनादेशे सर्वेषु भूतिकर्मसु पुरस्ताच्चोपरिष्टाच्चैताभिरेव जुहुयात् ॥१३॥

इति द्वादशः खण्डः ।

## ॥ अथ पाणिग्रहणम् ॥

"सम्राज्ञी[8] श्वशुरे भवेति" पिता भ्राता वाऽस्यग्रेण मूर्धनि जुहति स्रुवेण वा तिष्ठन्नासीनायाः प्राङ्मुख्याः प्रत्यङ्मुखः ॥१॥ "गृभ्णामि[9] ते सौभगत्वाय[10] हस्तमिति" दक्षिणेन पाणिना दक्षिणं पाणिं गृह्णाति साङ्गुष्ठमुत्तानेनोत्तानं तिष्ठन्नासीनायाः प्राङ्मुख्याः प्रत्यङ्मुखः ॥२॥ पञ्च चोत्तरा जपित्वा ॥३॥

"अमोहमस्मि[11] सा[11]त्वं, सा[12]त्वमस्यमोहं[12], द्यौरहं[13] पृथिवी त्वम्[14], ऋक्त्वमसि[15] सामहं, सा[16] मामनुव्रता भव ।"

"तावेह[17] विवहावहै, प्रजां[18] प्र जनयावहै, पुत्रान्विन्दावहै[18] बहून्, ते सन्तु[19] जरदष्टय इति" ॥४॥

---

1. ऋसं ६, ४७, १८; तु. बृध ८, ४५ 2. BMS रूपमिदर्शं० 3. ऋसं १०, ८५, २८; शौसं १४, १, २६; तु. आपमं १, ६, ८ 4 ऋसं ४, ५७, ३; वैश्रौ २७, ३० 5. OMS, गृहेषु गतेषु कान्त ना मधुपर्किकौ 6. तु. OEN 7. तु. OEN 8. ऋसं १०, ८५, ४६; तु. शौसं १४, १, ४४; ऋवि ३, २३, १; आपमं १, ६, ६; साममं १, २, २० 9. ऋसं १०, ८५, ३६; माममं १, २, १६; तु. मागृ १, ७, ३; पागृ १, ६, ३ 10. सुप्रजास्त्वाय'''आपम १, ३, ३ 11 '''स त्वम् ऐब्रा ८, २७, ४ 12 ''अमूहम्, आपमं १, ३, १४ 13. शौसं १४, २, ७१; ऐब्रा ८, २७, ४ 14. '''च इमम् पागृ ३, १३, ५ 15. तु. मागृ १, १०, १५ 16. तु. मागृ १, ७, १६; पागृ १, ८, १, आपमं १, ३, १४ 17. मागृ १, ७, ६; पागृ निर्दि- स्थ. । ता एव'''मागृ निर्दि- स्थ । तावेव संवहावहै ऐब्रा ८, २७, ४ 18. तु. मागृ १, ७, ६; पागृ निर्दि- स्थ. 19. BMS, जरदृष्टय :

उदकुम्भमश्वं "भूर्भुवः[1] स्वरिति" पूरयित्वा ॥५॥ पुन्नाम्नो वृक्षस्य सक्षीरान्त्सपलाशान्त्सकुशानोप्य[2] ॥६॥ हिरण्यमिति चैके ॥७॥ तं ब्रह्मचारिणे वाग्यताय प्रदाय ॥८॥ प्रागुदीच्यां[3] दिशि ताः स्थेयाः प्रदक्षिणा भवन्ति ॥९॥ अश्मानं चोत्तरत उपस्थाप्य ॥१०॥ "एहि[4] सूनरीति" उत्थाप्य ॥११॥

"एह्यश्मानमा[5] तिष्ठाश्मेव[6] त्वं स्थिरा[7] भव।
अभि[8] तिष्ठ पृतन्यतः सहस्व[9] पृतनायत[10] इति ॥"

दक्षिणेन प्रपदेनाश्मानमाक्रमय्य ॥१२॥ प्रदक्षिणमग्निं पर्याणीय ॥१३॥ तेनैव मन्त्रेण द्वितीयं वसनं प्रदाय ॥१४॥ लाजाञ्छमीपलाशमिश्रान् पिता भ्राता वा स्यादञ्जलावावपति ॥१५॥ उपस्तरणाभिधारण-[11] प्रत्यभिधारणं चाज्येन ॥१६॥ ताञ्जुहोति[12] ॥१७॥

इति त्रयोदशः खण्डः।

## ॥ अथ सप्तपदक्रमणम् ॥

"इयन्नार्युप[13] ब्रूते लाजानावपन्तिका।
शिवा[14] ज्ञातिभ्यो भूयासं[15] चिरं जीवतु मे पतिः स्वाहेति ॥"

तिष्ठन्ती जुहोति पतिर्मन्त्रं जपति ॥१॥ अश्मक्रमणाद्येवं[16] द्वितीयम् ॥२॥ एवं तृतीयम् ॥३॥ तूष्णींकामेन चतुर्थम् ॥४॥ प्रागुदीच्यां दिशि सप्त-

1 याजुषी श्रुतिः 2. OMS. संकुशान्, साकुशान्. तु. OEN 3. BMS. सागुदीच्याम् 4. तु. एहि सूनृते आपमं १, ३, १४ 5. शौम २, १३, ४; कौगृ ५४, ८, तु. आतिष्ठेममश्मानम् आपमं १, ५, १; आपगृ २, ५, ७; हिगृ १, ४, १ 6. तु. भागृ १, ७, ६; पागृ १, ७, १ 7. स्थिरो भव आपमं निर्दि. [illegible]। मागृ १, २२, १२ 8. माम ११, २०; तैमं ४, १, २, ३; मैमं २, ७, २; काम्सं १६, २; शत्रा ६, ३, ३, १२; मावश्रौ १६, २, १०, आपम निर्दि. स्थ. । तु. अव बाधे पृतन्यतः मैमं १, ३, १२ 9. शौमं १९, ३२, ६; मामं १२, ६६, मैस १, १, ११; काम १, १०; शत्रा ७, ४, २, ३९; वैश्रौ ६, १; आपमं निर्दि. स्थ. । 10. BMS. स्यतः 11 BMS. ध्वारणं 12 तु. OEN 13. शौमं १४, २, ६३; आपमं १, ५, २; सामम १, २ २ 14. श्वगावावा श निः 15. स्वगालावा श्रुतिः, तु. आयुष्मानस्तु मे पतिः पागृ १, ६, २; दीर्घायुरस्तु. शौमं १४, २, ६३ 16. OMS. श्माक्रमणात् एवः श्माक्रमणा।

पदानि प्रक्रमयति ॥५॥ "इष[2] एकपदी, ऊर्जे[3] द्विपदी, रायस्पोषाय[3] त्रिपदी, मायोभव्याय[4] चतुष्पदी, पशुभ्यः[5] पञ्चपदी, ऋतुभ्यः[5] षट्पदी, सखा[6] सप्तपदी भवेति" ॥६॥ तान्यद्भिः शमयति ॥७॥ आपोहिष्ठीयाभिस्तिसृभिः स्थेयाभिरद्भिर्मार्जयित्वा ॥८॥ मूर्धन्यभिषिच्य[8] ॥९॥ गां[9] ददानीत्याह ॥१०॥ ब्राह्मणेभ्यः किञ्चिद्दद्यात् सर्वत्र स्थालीपाकादिषु कर्मसु ॥११॥ सूर्या[10] विदुषे वाधूयम् ॥१२॥ गौर्ब्राह्मणस्य[11] वरः ॥१३॥ग्रामो[12] राजन्यस्य ॥१४॥ अश्वो वैश्यस्य ॥१५॥ अधिरथं शतं दुहितृमते ॥१६॥ याज्ञिकेभ्योऽश्वं ददाति ॥१७॥

इति चतुर्दशः खण्डः ।

## ॥ अथ वरगृहप्रस्थानम् ॥

"प्र[13]त्वा[14]मुञ्चामीति" तृचं गृहान् प्रतिष्ठमानायाम्[15] ॥१॥ "जीवं[16] रुदन्तीति" प्ररुदन्त्याम् ॥२॥ अथ रथाक्षस्योपाञ्जनं पत्नी कुरुते "अक्षन्नमीमदन्तेति"[17] एतया सर्पिषा ॥३॥ "शुची[18]ते चक्रे, द्वे[19] ते चक्रे इति" चैताभ्यां चक्रयोः पूर्वया पूर्वमुत्तरयोत्तरम् ॥४॥ उत्तरां च ॥५॥ "स[20] रथस्येति" एतया फलवतो वृक्षस्य शम्यागर्तेष्वेकैकां बध्नात्निखाय ॥६॥

1. OMS. प्रक्रामयति 2. तु. मागृ १, ७, १६, तु. इषे त्वा सुनृतं ... ... कौगृ ७५, १३ 3. भागृ निर्दि. स्थ.। तु. मागृ १. ११, १८ 4. सगात्र्येयो नन्दः। तु. मैसं १, ७, ७, ११; काठसं १०, २२, १२; कापसं १, ३, १० 5. तु. भागृ निर्दि. स्थ. 6. भागृ निर्दि, स्थ.। मगृ निर्दि, स्थ.। तु. मानगृ १, ३, १४ 7. तु. ऋसं १०, ९, १-३ 8. मूर्धनोः ... द्विवचनान्तः OEN ... पाठः। मूर्धन् शब्दस्य लिङ्गं पुंसि प्रयोक्तव्यं तु प्रयुक्तं च ... तु. पा १, २, ११ 9. ... 10. ऋसं १०, ८५ 11. तु. OEN. 12. ... तु. OEN. 13. मैसं ४, ११; ऋसं १०, ८५, २४; शौसं १४, १, १९; ५८; काठसं १, ११, ३; भागृ १, ७, १७; मानसं १, २, १६ 14. ना मुञ्चामि काठसं ३, ८, २ 15. BMS. ... 16. ऋसं १०, ४०, १०; शौसं १४, १. ४६; तु. भागृ १, ८, ४ 17. ऋसं १, ८२, २; शौसं १८, ४, ६१; मासं ३, ५१; काठसं १, ६, २१; मानसं १. १, २, ३१; भागृ ४, ७, २६ 18. ऋसं १०, ८५, १२; शौसं. १४, १, १२ 19. ऋसं १०, ८५, १६; शौसं १४, १, १६; शांसं १, २८, ११ 20. ऋसं ८, ८०, ७; शौसं. १४, १, ४१; मानसं १, १, ६

नित्या वाऽभिमन्त्र्य ॥७॥ अथोस्रौ युञ्जन्ति "युक्तस्ते[1] अस्तु दक्षिण इति" द्वाभ्याम्, "शुकावनड्वाहाविति[2]" एतेनार्द्धर्चेन युक्तावभिमन्त्र्य[3] ॥८॥ अथ यदि रथाङ्गं विशीर्येत छिद्येत वाऽऽहिताग्नेः गृहान् कन्यां[4] प्रपाद्य ॥९॥ "अभि[5] व्ययस्व खदिरस्येति" एतया प्रतिदध्यात्[6] ॥१०॥ "त्यं[7] चिदश्वमिति" ग्रन्थिम् ॥११॥ "स्वस्ति[8] नो मिमीतामिति" पञ्चर्चं जपति ॥१२॥ "सुकिंशुकमिति[9]" रथमारोहन्त्याम् ॥१३॥ मा[10] विदन् परिपन्थिन इति" चतुष्पथे ॥१४॥ "ये वध्व[11] इति" श्मशाने ॥१५॥ "वनस्पते[12] शतवल्श इति" वनस्पतावर्द्धर्चं जपति ॥१६॥ "सुत्रामाणमिति[13]" नावमारोहन्त्याम् ॥१७॥ "अश्मन्वतीति[14]" नदीं तरन्त्याम् ॥१८॥ अपि वा युक्तेनैव ॥१९॥ "उद्व[15] ऊर्मिरिति" अगाधे ॥२०॥ प्रेक्षणं च ॥२१॥ "इह[16] प्रियमिति" सप्त गृहान् प्राप्तायाः कृताः परिहाप्य[17] ॥२२॥

इति पञ्चदशः खण्डः ।

## ॥ अथ गृहप्रपादनम् ॥

आनडुहमित्युक्तम्[18] ॥१॥ तस्मिन्नुपवेश्यान्वारब्धायां पतिश्चतस्रो जुहोति ॥२॥ "अग्निना[19]" देवेन पृथिवीलोकेन लोकानामृग्वेदेन वेदानां तेन त्वा

1. ऋसं १, ८२, ५-६ 2 ऋसं १०, ८५, १० 3. OMS. युनक्ति 4. OMS. गृहम् 5. ऋसं ३, ५३, १९, ऋवि २, ३, ४ 6. OMS. वरिदध्यात् 7. ऋसं १०, १४३, २ 8. ऋसं ५, ५१, ११-१५; कात्री ८, १, २३; मागृ २, १५, ६ 9. ऋसं १०,८५,२०; शौसं १४, १, ६१; शाश्रौ ६, २८, ११; तु. गोगृ २, ४, १, २०; आपम १, ३, ४; मागृ १, १३, ६; शुकिं शुकम् BMS 10. ऋसं १०, ८५, ३२; शौसं १२, १, ३२, १४, २, ११ 11. ऋसं १०, ८५, ३१; शौसं. १४, २, १०, आपमं १, ६, ६; आपगृ २, ७, २४, बृदे ७, १३२ 12. ऋसं ३, ८, ११; तैसं १, ३, ५, १; आपश्रौ ५, २, ४; माश्रौ १, ८, १, १२; तु मासं ५, ४३; शाश्रौ ३, ६, ४, १६; मैसं १. १, २; तैसं १, १, २, १; तैब्रा ३, २, २, ६; आपश्रौ १, ४, ८, काठ १, २; ३१, १ 13. ऋसं १०, ६३, १०; शौसं ७, ६, ३; मासं २१, ६; तु पागृ ३, १५, ११; मागृ १, १३, १६; आगृ २, ६, ८ 14. ऋसं १० ५३, ८; शौसं १२, २, २६; शाश्रौ ४, १५, ५; १६. १२, १३, वैश्रौ १२, ११; कात्रौ २१, ४, २२ 15. ऋसं ३, ३३, १३; शौसं १४, २, १६ 16. ऋसं १०, ८५, २७-३३; कौसू ७७, २० 17. OMS. प्राप्तायां ताः 18. OMS. आनडुहम् 19 स्वराद्यो मन्त्रः

शमयाम्यसौ स्वाहा । वायुना[1] देवेनान्तरिक्षलोकेन लोकानां यजुर्वेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा । सूर्येण[1] देवेन द्यौर्लोकेन लोकानां सामवेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा । चन्द्रेण[1] देवेन दिशां लोकेन लोकानां ब्रह्मवेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा ॥३॥ भूर्या[1] ते पतिघ्न्यलक्ष्मी[2] देवरघ्नी जारघ्नी तां करोम्यसौ स्वाहेति" वा प्रथमया महाव्याहृत्या प्रथमोपहिता द्वितीयया द्वितीया तृतीयया तृतीया समस्ताभिश्चतुर्थी ॥४॥ "अघोरचक्षुरिति"[3] आज्यलेपेन चक्षुषी विमृजीत ॥५॥ "कया[4] नश्चित्र इति" तिसृभिः केशान्तानभिमृश्य ॥६॥ "उत त्या दैव्या[5] भिषजेति" चतस्रोऽनुद्रुत्यान्ते स्वाहाकारेण मूर्धनि संस्रावम् ॥७॥ अत्र हैके कुमारमुत्सङ्गमानयन्त्युभयतः[6] सुजातम्[6] "आ[7] ते योनिमिति" एतया[8] ॥८॥ अपि वा तूष्णीम् ॥९॥ तस्याऽञ्जलौ फलानि दत्त्वा पुण्याहं वाचयति ॥१०॥ पुंसवतीह भवति ॥११॥ "इहैव[9] स्तमिति" सूक्तशेषेण गृहान् प्रपादयन्ति ॥१२॥

इति षोडशः खण्डः ।

## ॥ अथ ध्रुवदर्शनम् ॥

"दधिक्राव्णो[10] अकारिषमिति" दधि संपिबेयाताम् ॥१॥ वाग्यतावासीयाताम् ध्रुवदर्शनात् ॥२॥ अस्तमिते[11] ध्रुवं दर्शयति ध्रुवैधि पोष्या[12] मयीति" ॥३॥ "ध्रुवं[13] पश्यामि प्रजां विन्दयेति"[14] ब्रूयात् ॥४॥ त्रिरात्रं ब्रह्मचर्यं चरेयाताम् ॥५॥ अधः शयीयाताम् ॥६॥ दध्योदनं[15] संभुञ्जीयाताम्

1. स्वरार्वेदो मन्त्रः 2. OMS. लक्ष्मी 3. ऋसं १०, ८५, ४४; आपम १, १, ४ पागृ १, ४, १६; हिगृ १, २०, २; मागृ १, १०, ६; आश्वगृ २, ४, ४ 4. ऋस ४, ३१. १—३; शौसं २०, १२४, १ शांश्रौ ७, २२, २; 5. ऋसं ८, १८, ८, 6. प्रक्षिप्त द्वा इति OEN. द्र॰ 7. शौसं ३, २३, २; तु॰ मासमं १, १३, १. हिगृ १, २५, १ 8. PMS. एत्येतया 9. ऋसं १०, ८५, ४२; शौसं १४, १, २२; भापगृ २, ६, १० 10. ऋसं ४, ३९, ३; 11. अस्तमितपदान्तं द्वितीय सूत्रं मन्वानः OEN. द्र॰ 12. तु॰ पागृ १. ८, १९: आपमं १, ८, ६; आश्वगृ नापू॰ स्थ॰ 13. स्वराशाखीया श्रुतिः 14 OMS. विन्देयेति 15. OMS. दध्योदनम्

"पिबतञ्च[1] तृप्णुतं चेति" तृचेन ॥७॥ सायंप्रातर्वैवाग्नमग्निं परिचरेयाताम्
"अग्नये[2] स्वाहाऽग्नये[3] स्विष्टकृते स्वाहेति" ॥८॥

"पुमांसौ[4] मित्रावरुणौ पुमांसावश्विनावुभौ ।[5]
पुमानिन्द्रश्चाग्निश्च[5] पुमांसं वर्धतां मयि स्वाहेति" ॥[6]
पूर्वां गर्भकामा ॥९॥ दशरात्रमविप्रवासः ॥१०॥

इति सप्तदशः खण्डः ।

## ॥ अथ चतुर्थीकर्म ॥

अथ चतुर्थीकर्म ॥१॥ त्रिरात्रे निवृत्ते स्थालीपाकस्य जुहोति ॥२॥

"अग्ने[8] प्रायश्चित्तिरसि त्वं[9] देवानां प्रायश्चित्तिरसि ।
याऽस्याः पतिघ्नी तनूस्तामस्या अप जहि ॥
वायो[10] प्रायश्चित्तिरसि त्वं देवानां प्रायश्चित्तिरसि ।
याऽस्या अपुत्रिया तनूस्तामस्या अप जहि ॥
सूर्य[11] प्रायश्चित्तिरसि[11] त्वं देवानां प्रायश्चित्तिरसि ।
यास्या अपशव्या तनूस्तामस्या अप जहि ॥
अर्यमणंनुदेवं[12] कन्या अग्निमयक्षत सेमां[13] देवो अर्यमा प्रेतो[14] मुञ्चातु मामुतः ।
वरुणं नु देवं कन्या अग्निमयक्षत[15] सेमां देवः पूषा प्रेतो मुञ्चातु मामुतः ॥३॥
"प्रजापत[16] इति" सप्तमी ॥४॥ सौविष्टकृत्यष्टमी ॥५॥

इत्यष्टादशः खण्डः ।

---

1. ऋसं, ८, ३५, १० 2. तु. मैसं ४, १०, ३ 3. तैब्रा ३, १२, २, २-८; तु. गोगृ १, ८, १४; खागृ २, १, २४; पागृ १, १२, ३ 4. मापम १. ४, ८; तु. गोगृ २, ६, ३; पागृ १. ९. ५ 5. पागृ निर्दि. स्थ. 6. तु पागृ निर्दि. स्थ. 7. PMS. निवृत्ते 8. साममं १, ४, १; पागृ १, ११, २; आपम १, १०, ३ 9. सामम १, ४, २ 10. तु. आपमं १, १०, ४; पागृ १, ११, २ 11. ०चित्ते:… सामम १, ४. ४ 12. आपमं १, ५. ७; तु. मागृ १, ७, १३; गोगृ २, २, ७; पागृ १, ६, २; मागृ १ ११, १२ 13. तु. मागृ निर्दि. स्थ. । साममं १, २. ३; आपमं निर्दि. स्थ. 14. तु. ऋसं १०, ८५, २५; शौस १४, १, १७, पागृ १, ६, २. 15. मागृ १, ११, १२; OMS. अयक्षत 16. ऋसं १०, १२१, १०

## ॥ अथ गर्भाधानम् ॥

अध्याण्डामूलं पेषयित्वतु वेलायाम् "उदीर्ष्वातः[1] पतिवतीति" द्वाभ्यामन्तेस्वाहाकाराभ्यां नस्तो दक्षिणतो निषिञ्चेत् ॥१॥ "गन्धर्वस्य[2] विश्वावसोर्मुखमसीति" उपस्थं प्रजनयिष्यमाणोऽभिमृशेत्[3] ॥२॥ समाप्ते अर्थे जपेत् ॥३॥ "प्राणे[4] ते [4]रेतो दधाम्यसाविति" अनुप्राणयात् ॥४॥

"यथा[5] भूमिरग्निगर्भा यथा[5] द्यौरिन्द्रेण गर्भिणी ।
वायुर्यथा[6] दिशां गर्भ एवं[7] गर्भं दधामि तेऽसाविति वा ॥५॥
आ[8] ते योनिं गर्भ एतु पुमान्[9] बाण इवेषुधिम् ।
आ[8] वीरो अत्र जायतां पुत्रस्ते[8] दशमास्यः ॥६॥
पुमांसं[10] पुत्रं जनय तं[11] पुमाननु जायताम् ।
तेषां माता[10] भविष्यसि जातानां[10] जनयांसि[12] च ॥७॥
पुंसि[13] वै पुरुषे[14] रेतस्तत्स्त्रियामनु[13] षिच्यतु ।
तथा[15] तदब्रवीद्धाता तत्प्रजापतिरब्रवीत्[13] ॥८॥
प्रजापतिर्व्यदधात्[16] सविता[17] व्यकल्पयत् ।
स्त्रीपूयमन्यात्[18] स्वादध[19]त्पुमांसमा[18] दधादिह ॥९॥
यानि[20] भद्राणि बीजानि पुरुषा[21] जनयन्ति नः ।
तेभिष्ट्वं[22] पुत्रं जनय सुप्रसूर्धेनुका[22] भव ॥१०॥
अभि[23] क्रन्द वीळयस्व गर्भमा धेहि साधय ।
वृषाणं वृषन्ना धेहि प्रजायै त्वा हवामहे[24] ॥११॥

1. तु. ऋमं १०, ८५, २१-२२; शांगृ १६, १३, १३; आपम १, १०, २ 2. स्वशाखीयाः पैः 3. BMS. प्रजनयिष्यमाणो 4. BMS. तत्रे 5. तु. शब्रा १४, ९, ४, २१; विद्यारण्यविष्ठाः पठाः। तु. OGN. 6. आपमं १, १२, ५; तु. हिगृ १, २५, १ 7. शब्रा, आपमं नापू. स्थ. 8. शौमं ३, २३, २, 9. तु. भागृ १, १३, ६ 10. शौमं ३, २३, ३; तु. आपमं १. १३, २ 11. सामब्रा १ ४, ८; आपमं नपू. स्थ. 12. OMS. जातयांसि, जनयान्ति, जनयानि, जनयसि 13. तु. शौमं ६, ११. २ 14. OMS. पुरुषः 15. स्वशाखीयो मन्त्रपादः 16. तु. शौमं ७, २४, १ 17. स्वशाखीया श्रुतिः तु. शौमं ६, ११, ३ 18. OMS. स्त्रीपूयम् तु. शौमं ६, ११, ३ 19. अन्यासु आदधद् इति BC. कोषो द्र. 20 शौमं ३, २३, ४; आपमं १, १३, ३; तु. आपगृ ३, ८, १३; हिगृ १, २५, १ 21. स्वशाखीया श्रुतिः। तु. शौमं ३, २३, ४; आपमं १, १३, ३; हिगृ १, २५, १ 22. तु. हिगृ नापू. स्थ. 23 तु. शौमं ५, २५, ८ 24. BMS. हुवामहे

यस्य[1] योनिं पतिरेतो गृभाय पुमान्[2] पुत्रो धीयतां गर्भे अन्तः।
तं पिपृहि[3] दशमास्योऽन्तरुदरे म[4] जायतां श्रेष्ठतमः स्वानामिति वा" ॥१८॥

इत्येकोनविंशः खण्डः।

## ॥ अथ पुंसवनम् ॥

तृतीये मासि पुंसवनम् ॥१॥ पुष्येण श्रवणेन वा ॥२॥ सोमांशुं[4] पेषयित्वा कुशकण्टकं वा न्यग्रोधस्य वा स्कन्धस्यान्त्यां शुङ्गां यूपस्य वाऽग्निष्ठाम्[5] ॥३॥ संस्थिते वा यज्ञे जुह्वः[5] संस्रावम् ॥४॥ "अग्निना[6] रयिम्" "तन्नस्तुरीपम्"[7] "समिद्धाग्निर्वनवत्"[8] "पिशङ्गरूप[9]इति" चतसृभिरन्तेस्वाहाकाराभिर्नस्तो दक्षिणतो निषिञ्चेत् ॥५॥

इति विंशः खण्डः।

## ॥ अथ गर्भरक्षणम् ॥

चतुर्थे मासि गर्भरक्षणम् ॥१॥ "ब्रह्मणाऽग्निः[10] संविदान इति" षट् स्थालीपाकस्य हुत्वा ॥२॥"अक्षीभ्यां[11] ते नासिकाभ्यामिति" प्रत्यृचमाज्यलेपेनाङ्गान्यनुविमृज्य ॥३॥

इत्येकविंशः खण्डः।

---

१. तु. हिगृ १, २५, १ 2 तु आपमं १, १२, ८; हिगृ नापृ. स्थ. 3. तु. आपम नापृ. स्थ. 4. तु. OGN. 5. OMS. जुह्वा: 6. ऋसं १, १, ३; तैसं ३, १, ११, १; मैसं ४, १०, ४; वास १९, ४, ३, १६; काश्री ५, १२, १६; शाश्री ३, ७, ३ 7. तु. ऋसं ३, ४, ६ 8. ऋसं ५, ३७, २ 9. तु. ऋसं २, ३, ६; शौसं ६, ४, २२ 10 ऋसं १०, १६२, १; शौसं २०, ९६, ११; तु. मागृ २, १८, २ 11. ऋसं १०, १६३, ६; शौसं २, ३३, १; शाश्री १६, १३, ४; आपसं १, १७, १; भागृ ३, ६, १०

## ॥ अथ सूतिकागृहोपलेपनम् ॥

काकातन्या मचकचातन्याः कोशातक्या बृहत्याः कालक्लीतकस्येति मूलानि पेषयित्वोपलेपयेद्देशं यस्मिन् प्रजायेत रक्षसामपहत्यै ॥१॥

इति त्रयोविंशः खण्डः ।

## ॥ अथ जातकर्म ॥

अथ जातकर्म ॥१॥ जातं कुमारं त्रिर् अभ्यवान्यानुप्राणयात्[1] "ऋचा[2] प्राणिहि यजुषा[3] समनिहि, साम्नोदनिहीति"[4] ॥२॥ सर्पिर्मधुनी दध्युदके च सन्निनीय व्रीहियवौ वा सन्निघृष्य त्रिः प्राशयेज्जातरूपेण ॥३॥

"प्र[5] ते यच्छामि मधुमन्मखाय वेदं प्रसूतं सवित्रा मघोना ।
आयुष्मान् गुपितो[6] देवताभि. शतं जीव शरदो लोके अस्मिन्निति ॥"

असाविति नामास्य दधाति घोषवदाद्यन्तरन्तस्थं द्व्यक्षरं चतुरक्षरं वाऽपि वा षडक्षरं कृतं कुर्यान्न तद्धितम् ॥४॥ तदस्य पिता माता च विद्याताम् ॥५॥ दशम्यां व्यावहारिकं ब्राह्मणजुष्टम् ॥६॥ गोः कृष्णस्य शुक्लकृष्णानि लोहितानि च रोमाणि मधं[5] कारयित्वैतस्मिन्नेव चतुष्टये सन्निनीय चतुः प्राशयेदिति माण्डूकेयः ॥७॥ "भूरृग्वेदं[6] त्वयि दधाम्यसौ स्वाहा, भुवो[6] यजुर्वेदं त्वयि दधाम्यसौ स्वाहा, स्वः सामवेदं त्वयि दधाम्यसौ स्वाहा, भूर्भुवः[7] स्वर्वाको वाकश्चमितिहासपुराणमों[7] सर्वान् वेदांस्त्वयि दधाम्यसौ स्वाहेति" वा ॥८॥ मेधाजननं दक्षिणे कर्णे "वागिति"[8] त्रिः ॥९॥

---

1 अभ्यवान्य इति OEN. शोधो दुर्घटः तत्प्रयोगस्य कल्पे दुर्भिचत्वात्। तु. शांश्रौ १७, १५, १२; १७, २ 2. स्वाशाखीया श्रुतिः 3. तु. आगृ १, १५, १ 4. BMS. गुपितोम 5 BMS. मखम् 6. तु. हिगृ २, ३, ६ 7. स्वाशाखीयो मन्त्र.। OMS. पुराणमीमांसास्त्वान् पुराणानि सर्वान् 8 कौब्रा २, ३, ५; षब्रा २, २; तु. ऐब्रा ५, २८, ७; शब्रा १४, ९, ४, २५; ऐआ ५, १, ५, ६; गाश्रौ ८, २१

"वाग्देवी[1] मनसा संविदाना प्राणेन वत्सेन[2] सहेन्द्रप्रोक्ता।
जुषतां त्वा सौमनसाय देवी मही मन्द्रा वाणी वाणीचो[3] सलिला स्वयम्भूरिति" ॥
चानुमन्त्रयेत ॥१०॥ शणसूत्रेण विग्रन्थ्य जातरूपम् ॥११॥ दक्षिणे पाणावपिनह्य आ उत्थानात् ॥१२॥ ऊर्ध्वं दशम्या ब्राह्मणेभ्यो दद्यात् ॥१३॥ अमा वा कुर्वीत ॥१४॥

इति चतुर्विंशः खण्डः।

## ॥ अथ नामकर्म[4] ॥

दशरात्रे चोत्थानम् ॥१॥ मातापितरौ[4] शिरः[5]स्नातावहतवाससौ ॥२॥ कुमारश्च ॥३॥ एतस्मिन्नेव सूतिकाग्नौ स्थालीपाकं श्रपयित्वा ॥४॥ जन्मतिथिं हुत्वा त्रीणि च भानि सदैवतानि ॥५॥ तन्मध्ये जुहुयाद्यस्मिन् जातः स्यात् पूर्वं तु दैवतं सर्वत्र ॥६॥

"आयुष्टे[6] अद्य गीर्भिरयमग्निर्वरेण्यः[7]।
आयुर्नो[8] देहि[9] जीवसे आयुर्दा अग्ने हविषा वृधानो।
घृतप्रतीको घृतयोनिरेधि घृतं पीत्वा मधु चारु गव्यम्।
पितेव[10] पुत्रमिह रक्षतादिममिति" ॥
"त्वं[11] सोम महे भगमिति"।

दशमी स्थालीपाकस्य ॥७॥ नामधेयं प्रकाशं कृत्वा ॥८॥ ब्राह्मणान् स्वस्तिवाच्य ॥९॥ एवमेव मासि-मासि जन्मतिथिं हुत्वा ॥१०॥ ऊर्ध्वं[12] संवत्सराद् गृह्येऽग्नौ जुहोति ॥११॥

इति पञ्चविंशः खण्डः।

---

1. स्वराद्वैत्य मुनिः 2. मुखो यजुर्वेद त्वयि दधाम्यसौ स्वाहा, स्वः सामवेद त्वयि दधाम्यसौ स्वाहेति BMS. अधिकः पाठः। 3. OMS. व गौवियाणीचीः सलिलाः 4. BMS. ऊर्ध्वं म ना० 5. OMS. शिरस्स्ना० 6. तु. तैमं १, ३, १४, ४; आश्रौ २, १०, ४; हिगृ १, ५, १५ 7. OMS. वरेण्यम् 8 तु. शौमं ७, ५३, ६ 9. OMS देहि 10. तु. शौमं २, १३, १; कौगृ ६१, ४ 11. ऋसं १, ९१, ७; मैसं ४, १०, ६; काठसं २, १४; तैसं २, ४, ५, ३; आश्रौ २, १०, ३. 12. ऊर्ध्वंसा कौगृ १, १७, ६।

## ॥ अथ होमः ॥

अग्नये[1] कृत्तिकाभ्यः ॥१॥ प्रजापतये रोहिण्यै ॥२॥ सोमाय मृगशिरसे ॥३॥ रुद्रायाऽऽर्द्राभ्यः ॥४॥ अदितये पुनर्वसुभ्याम् ॥५॥ बृहस्पतये पुष्याय ॥६॥ सर्पेभ्यो[2]ऽश्लेषाभ्यः ॥७॥ पितृभ्यो मघाभ्यः ॥८॥ भगाय फल्गुनीभ्याम् ॥९॥ अर्यम्णे फल्गुनीभ्याम ॥१०॥ सवित्रे हस्ताय ॥११॥ त्वष्ट्रे चित्रायै ॥१२॥ वायवे स्वातये[3] ॥१३॥ इन्द्राग्निभ्यां विशाखाभ्याम ॥१४॥ मित्रायाऽनुराधायै ॥१५॥ इन्द्राय ज्येष्ठायै[4] ॥१६॥ निर्ऋत्यै मूलाय ॥१७॥ अद्भ्योऽषाढाभ्यः ॥१८॥ विश्वेभ्यो देवेभ्योऽषाढाभ्यः ॥१९॥ ब्रह्मणेऽभिजिते ॥२०॥ विष्णवे श्रवणाय ॥२१॥ वसुभ्यो धनिष्ठाभ्यः ॥२२॥ वरुणाय शतभिषजे ॥२३॥ अजायैकपदे प्रोष्ठपदाभ्यः ॥२४॥ अहिर्बुध्न्याय प्रोष्ठपदाभ्यः ॥२५॥ पूष्णे रेवत्यै ॥२६॥ अश्विभ्यामश्विनीभ्याम ॥२७॥ यमाय भरणीभ्यः ॥२८॥

इति षड्विंशः खण्डः ।

## ॥ अथ अन्नप्राशनम् ॥

षष्ठे मास्यन्नप्राशनम् ॥१॥ आजमन्नाद्यकामः ॥२॥ तैत्तिरं ब्रह्मवर्चसकामः ॥३॥ मात्स्यं जवनकामः ॥४॥ घृतौदनं तेजस्कामः ॥५॥ दधिमधुघृतमिश्रमन्नं प्राशयेत् ॥६॥

"अन्नपतेऽन्नस्य[5] नो देह्यनमीवस्य[6] शुष्मिणः ।
प्र-प्र[5] दातारं तारिष ऊर्जंनो[7] धेहि द्विपदे चतुष्पदे" ॥
"यच्चिद्धि"[8] "महश्चिन्"[9]
"इममग्न[10] आयुषे वर्चसे तिग्ममोजो[10] वरुण सोम राजन् ।
मातेवास्मा[10] अदितिः शर्म [illegible] सद्विश्वे[11] देवा जरदष्टिर्यथासदिति"॥

---

1. प्रक्षिप्तसदृश इति नाभा. शाङ्गृ० नोपलभ्यते तु OGN. 2. BMS, ०र्पेभ्योऽले० । आश्रेषाभ्यः इति सार्वत्रिक पाठः । तु. तैब्रा ३, १, ४, ७; वैगृ ३, २०; बौगृ ३, १०, ४ 3. OMS. स्वात्यै 4. तु. वैगृ ३, २० । ज्येष्ठाय, ज्येष्ठ्याय 5. मामं ११, ८३; तैसं ४, २, ३, १; मैस २, १०, १ 6. OMS. धेहि 7. तु. मैसं १, ६, २; कामं ७, १४ 8. ऋसं ४, १२, ४ 9. ऋसं ४, १२, ५; मैसं ४, ११, १; कामं २, १५; 10. तु. तैसं २, ३, १०, ३; शौस २, २८, ५; 11. OMS. यनीद

हुत्वा ॥७॥ "अग्न[1] आयूंषीति" अभिमन्त्र्य ॥८॥ उदगग्रेषु[2] कुशेषु "स्योना[3] पृथिवि भवेति" उपवेश्य ॥९॥ महाव्याहृतिभिः प्राशनम् ॥१०॥ शेषं माता प्राश्नीयात् ॥११॥

इति सप्तविंशः खण्डः ।

## ॥ अथ चूडाकर्म ॥

संवत्सरे चूडाकर्म ॥१॥ तृतीये वा वर्षे ॥२॥ पञ्चमे क्षत्रियस्य ॥३॥ सप्तमे वैश्यस्य ॥४॥ अग्निमुपसमाधाय ॥५॥ व्रीहियवानां तिलमाषाणामिति पात्राणि च पूरयित्वा ॥६॥ आनडुहं च गोमयं कुशमिश्रं च केशप्रतिग्रहणायादर्शनवनीतं लोहक्षुरं चोत्तरत उपस्थाप्य ॥७॥

"संपृच्यध्वं[4] ऋतावरीरूर्मिणा[5] मधुमत्तमाः।
पृञ्चतीर्मधुना[6] पयो मन्द्रा धनस्य सातय[7] इति ॥"

उष्णास्वप्सु शीता आसिञ्चति ॥८॥

"आप[8] उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे[9]।
त्र्यायुषं जमदग्नेः[10] कश्यपस्य त्र्यायुषम्।
अगस्त्यस्य[11] त्र्यायुषं यद्देवानां[12] त्र्यायुषम्।
तत्ते करोमि[13] त्र्यायुषमिति ॥"

असाविति शीतोष्णाभिरद्भिर्दक्षिणं केशपक्षं निरभ्यनक्ति ॥९॥ शलल्यैके विजटान्[14] कृत्वा ॥१०॥ नवनीतेनाभ्यज्य[15]॥११॥ 'ओषधे[16] त्राय-

1. तु. कर्म० १, ६६, १८: काम १६, १४: शांश्रौ २, २, ५: लाश्रौ १, ५, ११: काश्रौ २१, ४, २६ 2. OMS. BMS. केरोषु 3. ऋसं १, २२, १५: वसं ३५, २१: मासं २, २, ७: काशृ २, २, ७: पागृ ३, २, १२ 4. तैसं १, १, ३, १: मैसं ४, १, ३: कसं १, ३ 5. ऊर्मिणीः तैसं निर्दि. स्थ. 6. वर्षेण शौसं २०, ४८, २; BMS. पृञ्चो 7. सातयः कसं १, ३ 8. तैसं १, २, १, १: काठं २, १; गोगृ २, ६, ११: भागृ ४, १०, ५: हिगृ १, ६, १२: मागृ १, २१, २ 9. वर्चसे शौसं ६, ६८, २ 10. कश्यपस्य मैसं ४, ३, १ 11 सामसं १, ६, ८: मगृ १, १, २४ 12. यद्देवेषु माभ्रं १, ६२ 13. तत्तु मसं नागृ. स्थ.। वाजसं ३, ७, २: हिगृ १. ६, ६ 14. BMS. वा इत्यधिकः पाठः। 15. BMS. ०भ्यज्यो 16. तैसं १, २, १, १: मैसं १, २, १: काश्रौ ७, २, ४

नैनं हिंसीरिति[11] कुशतरुणमन्तर्दधाति ॥१२॥ केशान् कुशतरुणं चाऽऽदर्शेन संस्पृश्य ॥१३॥ 'तेजो'ऽसि, स्वधितिष्टे[1] पिता, नैनं[2] हिंसीरिति' लोहक्षुरमादत्ते ॥१४॥

"येनावपत्[3] सविता क्षुरेण सोमस्य[4] राज्ञो वरुणस्य विद्वान्।
येन[5] धाता बृहस्पतिरिन्द्रस्य चावपच्छिरः।
तेन[6] ब्रह्माणो वपतेदमस्याऽऽयुष्मान् दीर्घायुरयमस्तु वीरोऽसाविति ॥"[7]

केशाग्राणि छिनत्ति कुशतरुणं च ॥१५॥ एवं द्वितीयमेवं तृतीयम् ॥१६॥ एवं द्विरपरतः ॥१७॥ निकक्ष्योः पश्चात्स्थाने गोदानकर्मणि ॥१८॥ एतदेव गोदानकर्म यच्चूडाकर्म ॥१९॥ षोडशे वर्षेऽष्टादशे वा ॥२०॥ तृतीये तु प्रवपने गां दद्यादहतं च वासः ॥२१॥ तूष्णीमावृतः कन्यानाम् ॥२२॥ प्रागुदीच्यां दिशि बह्वौषधिके[8] देशेऽप्सु वा संनीय केशान्निखनन्ति ॥२३॥ नापिताय धान्यपात्राणि नापिताय धान्यपात्राणि ॥२४॥

इत्यष्टाविंशः खण्डः ।

## इति शाङ्खायनगृह्यसूत्रे प्रथमोऽध्यायः

1. [illegible] 2. [illegible] 3. [illegible]
4. [illegible]
5. [illegible] 6. [illegible] 7. [illegible]
[illegible] 8. OMS बह्वौषधिके बहौषधिके 9. LMS. गृह्यसूत्रे प्रथमोऽध्यायः। OMS. प्रथमोऽध्यायः

## ॥ अथ उपनयनम् ॥

गर्भाष्टमेषु[1] ब्राह्मणमुपनयेत ॥१॥ ऐणेयेनाऽजिनेन ॥२॥ गर्भदशमेषु वा ॥३॥ गर्भैकादशेषु क्षत्रियं रौरवेण ॥४॥ गर्भद्वादशेषु वैश्यं गव्येन ॥५॥ आ षोडशाद् वर्षाद् ब्राह्मणस्याऽनतीतः कालः ॥६॥ आ द्वाविंशात् क्षत्रियस्य ॥७॥ आ[2] चतुर्विंशाद् वैश्यस्य ॥८॥ अत ऊर्ध्वं पतितसावित्रीका भवन्ति ॥९॥ नैनानुपनयेयुः ॥१०॥ नाऽध्यापयेयुः ॥११॥ न याजयेयुः ॥१२॥ नैभिर्व्यवहरेयुः ॥१३॥ अहतेन वा सर्वान्मेखलिनः ॥१४॥ मौञ्जी मेखला ब्राह्मणस्य ॥१५॥ धनुर्ज्या क्षत्रियस्य ॥१६॥ ऊर्णासूत्री[3] वैश्यस्य ॥१७॥ पालाशो बैल्वो वा दण्डो ब्राह्मणस्य ॥१८॥ नैयग्रोधः क्षत्रियस्य ॥१९॥ औदुम्बरो वैश्यस्य ॥२०॥ प्राणसंमितो[4] ब्राह्मणस्य ॥२१॥ ललाटसंमितः क्षत्रियस्य ॥२२॥ केशसंमितो वैश्यस्य ॥२३॥ सर्वे वा सर्वेषाम् ॥२४॥ येनाऽऽबद्धेनोपनयेताऽऽचार्याधीनं तत् ॥२५॥ परिवाप्योपनेयः स्यात् ॥२६॥ आप्लुत्याऽलङ्कृत्य ॥२७॥ हुत्वा[5] जघनेनाऽग्निं तिष्ठतः प्राङ्मुख आचार्यः प्रत्यङ्मुख[6] इतरः[7] ॥२८॥ तिष्ठँस्तिष्ठन्तमुपनयेत् ॥२९॥

"मित्रस्य[1] चक्षुर्धरुणं बलीयस्तेजो[2] यशस्वि स्थविरं समृद्धम्[3] ।
अनाहनस्यं वसनं जरिष्णु[4] परीदं वाज्यजिनं[5][6] दधेऽहम्" ॥३०॥

इति प्रथमः खण्डः ।

1. BMS. ॐ इन्द्रियेकः खण्डः । मूलने विनष्टोऽयं तु. OEN. 2. BMS. तृतीय नास्ति 3. ऊर्णासूत्री OMS. 4. प्राणसंमितो OMS. तु गौत्र १. २१: शांखायने प्राणसंमितकत्वात् इति पाठ उपलभ्यते 5. BMS. षष्ठो न स्ति 6. बहु BMS. प्राङ्मुख मूलदर्शेषु नोपलभ्यते तु. OEN: OGN: आपस्तम्ब २,२,११: वसु २,२,१० 7. भारद्वाज गृह्य १,४,६. 8. सन्दिग्धम् च तु: हिर: आपस्तम्ब निर्दि. सं. 9. अरिष्टः वसु: निर्दि. [illegible]. अरिष्ट हिर: आपस्तम्ब दक. निर्दि. सं. 10. ०र्द वा जिनम् वसु निर्दि. सं. तु. हिर निर्दि. सं.

"इयं[1] दुरुक्तान्[2] परिबाधमाना वर्णं पवित्रं[3] पुनती न[4] आगात्।
प्राणापानाभ्यां बलमाविशन्ती[5] सखा[6] देवी सुभगा मेखलेयमिति"॥

त्रिर्मेखलां प्रदक्षिणं त्रिः परिवेष्ट्य ॥१॥ ग्रन्थिरेकस्त्रयोऽपि वाऽपि वा पञ्च ॥२॥ यज्ञोपवीतं कृत्वा "यज्ञोपवीतमसि[7] यज्ञस्य त्वोपवीतेनोप नह्यामीति" ॥३॥ अञ्जली पूरयित्वाऽथैनमाह "को[8] नामासीति" ॥४॥ "असावहं[9] भो३ इतीतरः॥५॥समानाऽऽर्षेय[10] इत्याचार्यः॥६॥समानार्षेयोऽहं[10] भो३इतीतरः" ॥७॥ ब्रह्मचारी[9] भवान ब्रूहीति ॥८॥"ब्रह्मचार्यहं[9] भो३इतीतरः"॥९॥ "भूर्भुवः स्वरिति"अस्याऽञ्जलावञ्जलींस्त्रीन् आसिच्य॥१०॥दक्षिणोत्तराभ्यां पाणिभ्यां पाणी संगृह्य जपति ॥११॥ "देवस्य[11] त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामुपनयाम्यसाविति ॥१२॥ "गणानान्त्वेति"[12] गणकामान् ॥१३॥ "आ[13]गन्ता मा रिषण्यतेति"योधान्॥१४॥ महाव्याहृतिभिर्व्याधितान्॥१५॥

इति द्वितीयः खण्डः।

"भगस्ते[14] हस्तमग्रभीत्[15] सविता[16] हस्तमग्रभीत्[15]।
पूषा[17] ते हस्तमग्रभीदर्यमा हस्तमग्रभीत्[18]।
मित्रस्त्वमसि धर्म्मणा[19]ऽग्निराचार्य्यस्तव[20] ॥

"असावहं[9] चोभौ, अग्न[9] एतं ते ब्रह्मचारिणं परि ददामि, इन्द्रैतं[9] ते ब्रह्मचारिणं परि ददामि, आदित्यैतं[9] ते[21] ब्रह्मचारिणं परि ददामि, विश्वे[9] देवा

---

1 सामम १, ६, २७; आपम २, २, ६, तु गोगृ २, १०, ३७; आश्वगृ ४, १०, ११ 2. दुरुक्तम् पागृ २, २, ८ 3 पुराणम् मागृ १, २२, १० 4 मे मागृ निर्दि- स्थ. तु. आपमं निर्दि. स्थ. 5. आहरन्ती सामम निर्दि. स्थ. आभरन्ती आपम निर्दि. स्थ. आदधाना पागृ निर्दि. स्थ. आवहन्ती हिगृ १, ४, ४; आमजन्ती मागृ निर्दि. स्थ. OMS. आशिशान्ति 6. प्रिया देवानाम् आपमं निर्दि. स्थ. तु. मागृ; सामम निर्दि. स्थ. 7. तु. पागृ २, २, १० 8. माम ७, २६ 9. स्वशाखीया श्रुतिः। 10. स्वशाखीया श्रुतिः। तु. OEN 11. तु. हिगृ १, ५, ८ 12. ऋमं २, २३, १ 13. ऋमं ८, २०, १; बृदे ६, ५७ 14. आपमं २, ३, १०; आश्वगृ ४, १०, १२ 15. अग्रहीत् शौम १४, १, ५१ 16. साममं १, ६, १५ 17. आपमं २, ३, ७ 18. अग्रहीत् साममं निर्दि. स्थ. 19. आपमं २, ३, १२; कर्मणा साममं निर्दि. स्थ. 20. वाध ७, ६ 21. हिगृ १, ७, १०

एतं वो ब्रह्मचारिणं परि ददामि दीर्घायुत्वाय सुप्रजास्त्वाय सुवीर्याय रायस्पोषाय सर्वेषां वेदानामाधिपत्याय सुश्लोक्याय स्वस्तये ॥१॥ ऐन्द्रीमावृतमावर्त[1] आदित्यस्याऽऽवृतमन्वावर्त[2] इति" दक्षिणं बाहुमन्वावृत्य ॥२॥ दक्षिणेन प्रादेशेन दक्षिणमंसमन्ववहृत्य "अरिष्यतस्ते[3] हृदयस्य प्रियो भूयासमिति" हृदयदेशमभिमृशति॥३॥ तूष्णीं प्रसव्यं पर्यावृत्य ॥४॥ अथास्योर्ध्वाङ्गुलिं[4] पाणिं हृदये निधाय जपति ॥५॥

इति तृतीयः खण्डः।

"मम[5] व्रते हृदयं ते दधामि मम[6] चित्तमनु चित्तं ते अस्तु।
मम[7] वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यमिति" ॥१॥

कामस्य[8] ब्रह्मचर्यस्यासाविति ॥२॥ तेनैव मन्त्रेण तथैव पर्यावृत्य ॥३॥ दक्षिणेन प्रादेशेन दक्षिणमंसमन्वारभ्य जपति ॥४॥ "ब्रह्मचार्यसि[9], समिध[10]-मा धेहि, अपोऽशान[10], कर्म[10] कुरु, मा[11] दिवा सुषुप्थाः[11], वाचं[12] यच्छ आ समिदाधानात्" ॥५॥ "एषा[13] ते अग्ने समिदिति" अभ्यादधाति समिधं तूष्णीं वा ॥६॥

इति चतुर्थः खण्डः।

## ॥ अथ सावित्रानुवाचनम् ॥

संवत्सरे सावित्रीमन्वाह॥१॥ त्रिरात्रे॥२॥ अन्वक्षं[14] वा ॥३॥ गायत्रीं ब्राह्मणायानुब्रूयात् ॥४॥ त्रिष्टुभं क्षत्रियाय ॥५॥ जगतीं वैश्याय ॥६॥

1. मन्वावर्ते तैसं १, ६, ६, २; शांश्रौ १, ६, ५; कात्श्रौ ४, १५, २; तु. OEN. 2. शांश्रौ निर्दि. स्थ. 3. स्वरात्मीया श्रुतिः। 4. तु. OEN. 5. मानमं १, २, २१; तु. मागृ १, २२, ७ 6. तु. पागृ १, ८, ८; हिगृ १, ५, ११ 7. मामनं निर्दि. स्थ. मागृ १, १०, १३ 8. विमर्शाभूस्य भूमिकायां द्र. OMS. ब्रह्मचार्य् असि असौ, BMS. ब्रह्मचर्यं तु.अग्ने ब्रह्मचार्य् असि मम ब्रह्मचार्य् असि. तैसं २६, ४१, २ 9. शामनं १, ६, २५; तु. गोगृ २, १०, ३३ 10. सामनं निर्दि. स्थ. शाब्रा ११, ५, ४, ५ 11. सान्तोः मामनं निर्दि. स्थ. तु. ऊर्ध्वस्तिष्ठ प्र वा स्वन् तैसं ४, १, ६, ३; मैसं २, ७, ६; काठसं १६, ६; तैब्रा ४, ३, ३; तु. गोगृ २, १०, ३४ 12. तु. शाब्रा १३, ४, १, ७ 13. तु. मामं २, १४ 14. OMS. अन्वक्षम्

सावित्रीं त्वेव ॥७॥ उत्तरेणाग्निमुपविशतः ॥८॥ प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरः ॥९॥ "अधीहि[१] भो३इति" उक्त्वा ॥१०॥ आचार्य[२] ॐकारं प्रयुज्याथेतरं वाचयति "सावित्रीं[२] भो अनु ब्रूहीति" ॥११॥ अथास्मै सावित्री-मन्वाह "तत्सवितुर्वरेण्यमिति[३]" एतां पच्छोऽर्द्धर्चशोऽनवानम् ॥१२॥

इति पञ्चमः खण्ड. ।

## ॥ अथ व्रतानि ॥

"आपो[४] नाम स्थ शिवा नाम स्थ ।
ऊर्जो नाम स्थाऽजरा नाम स्थ ।
अभया नाम स्थाऽमृता नाम स्थ ।"

"तासां[४] वोऽशीय सुमतौ मा धत्तेति" एवं त्रिरप आचमय्य ॥१॥ "स्वस्ति[५] नो मिमीतामिति" पञ्चर्चेन दण्डं प्रयच्छति ॥२॥ वरो दक्षिणा ॥३॥ प्रदक्षिणमग्निं पर्याणीय[७] भिक्षते ग्रामम् ॥४॥ मातरं त्वेव प्रथमाम् ॥५॥ या चैनं[८] न प्रत्याचक्षीत ॥६॥ आचार्याय भैक्ष्यं निवेदयित्वाऽनुज्ञातो गुरुणा भुञ्जीत ॥७॥ अहरहः समिदाधानं भिक्षाचरणमधःशय्या[९] गुरुशुश्रूषेति ब्रह्मचारिणो नित्यानि ॥८॥

इति षष्ठः खण्डः ।

## ॥ अथ अनुवाचनम् ॥

अथा[१०]ऽनुवाचनस्य[११] ॥१॥ अग्नेरुत्तरत उपविशतः ॥२॥ प्राङ्मुख आचार्यः प्रत्यङ्मुख इतरः ॥३॥ अभिवाद्य पादावाचार्यस्य पाणी[१२] प्रक्षाल्य[१२] ॥४॥

---

1. तु. भागृ १, २१, ४; गोगृ २, १०, ३८ 2. [illegible]. मिथ १, ४६; तु. गोगृ निर्दि. स्थ. पूर्वेण मूत्रेणान्वय इति नाभा. ३तु. OEN. 3. ऋसं ३, ६२, १० 4. स्वदाशीया श्रुतिः । भूयसे विमर्शाय तु. OEN. 5. स्वशाखीया श्रुति । 6. ऋसं ५, ५१, ११-१५ 7. BMS. पर्यारयीत्य 8. BMS चैनम् 9. BMS. शय्याम् 10. [illegible]. OEN. [illegible]. OMS. मनुवचनस्य 12. BMS. पाठो नास्ति

दक्षिणेन जानुनाऽऽक्रम्य मूले कुशतरुणान् ॥५॥ दक्षिणोत्तराभ्यां पाणिभ्यां मध्ये परिगृह्य ॥६॥ तान् सव्येनाऽऽचार्योऽग्रे संगृह्य दक्षिणेनाऽद्भिः परिषिञ्च-न्नथेतरं वाचयति ॥७॥ "सावित्रीं[1] भो३ अनु ब्रूहीति" इतरः ॥८॥ "सावित्रीं[3] ते अनु ब्रवीमीति" आचार्यः ॥९॥ "गायत्रीं[3] भो३ अनु ब्रूहीति" इतरः, "गायत्रीं[3] ते अनु ब्रवीमीति" आचार्यः ॥१०॥ वैश्वामित्रीं भो३ अनु ब्रूहीति" इतरः, "वैश्वानरीं[3] ते अनु ब्रवीमीति" आचार्यः ॥११॥ "ऋषीन्[3] भो३ अनु ब्रूहीति" इतरः, "ऋषींस्ते[3] अनु ब्रवीमीति" आचार्यः ॥१२॥ "देवता[3] भो३ अनु ब्रूहीति" इतरः, "देवतास्ते[3] अनु ब्रवीमीति" आचार्यः ॥१३॥ "छन्दांसि[3] भो३ अनु ब्रूहीति" इतरः, "छन्दांसि[3] ते अनु ब्रवीमीति" आचार्यः ॥१४॥ "श्रुतिं[3] भो३ अनु ब्रूहीति" इतरः, "श्रुतिं[3] ते अनु ब्रवीमीति" आचार्यः ॥१५॥ "स्मृतिं[3] भो३ अनु ब्रूहीति" इतरः, स्मृतिं[3] ते अनु ब्रवीमीति" आचार्यः ॥१६॥ "श्रद्धा-मेधे[3] भो३ अनु ब्रूहीति" इतरः, "श्रद्धा-मेधे[3] अनु ब्रवीमीति" आचार्यः ॥१७॥ एवमेवमृषेर्यस्य-यस्य यो-यो मन्त्रो यद्देवत्यो यच्छन्दाश्च[4] तथा-तथा[5] तं-तं मन्त्रमनुब्रूयात् ॥१८॥ अपि वाऽविन्दन्नृषिदैवतच्छन्दांसि "तत्सवितुर्वरेण्यमिति"[6] एतां पच्छोऽर्द्धर्चशोऽनवानमित्येषेति समाप्त आहा-ऽऽचार्यः ॥१९॥ एवमेकैकमृषिमनुवाकं वाऽनुब्रूयात् ॥२०॥ क्षुद्रसूक्तेष्वनु-वाकम्[7] ॥२१॥ यावद्वा गुरुर्मन्येत ॥२२॥ आद्योत्तमे कामं सूक्ते वाऽनुब्रूया-दृषेः ॥२३॥ अनुवाकस्य वा ॥२४॥ एकैकां सूक्तादाविति ॥२५॥ एषा प्रभृतिरिति कामं सूक्तादावाचार्य इति ॥२६॥ एतदपिस्वाध्याये[8] व्याख्यातम् ॥२७॥ समाप्ते[9] कुशतरुणानादायाऽऽनडुहेन मूले कुण्डं कृत्वा यथासूक्तं कुशेष्वपो निषिञ्चति ॥२८॥ अहःशेषं स्थानमुपवासश्च ॥२९॥

इति सप्तमः खण्डः।

---

1. BMS. क्रमे 2. तु. कागृ १, २१, ४; भागृ ४, ११, ५; हिगृ १, ६, १० 3. सावित्र्यादिषु प्लुतिः। 4. OMS. यच्छन्दाश्च 5. BMS. पाठो नास्ति 6. ऋसं ३, ६२, १०; कासं ३, ३५; मैसं ४, १०, ३; तैसं १, ५, ६, ४ 7. तु. ऋसं १०, १२८-१९१ 8. ताम्यविवरणं मत्वेदं तु. OEN. 9. BMS. पाठो नास्ति

अपराह्णे ऽक्षतधाना भित्त्वाऽऽज्याहुतिधर्म्मेणाऽग्नौ पाणिना जुहुयात् "सदसस्पतिमद्भुतमिति"[1] प्रत्यृचं[2] सूक्तशेषेण ॥१॥ भक्षैराचार्यं स्वस्ति-वाच्य ॥२॥

इत्यष्टमः खण्डः ।

## ॥ अथ सन्ध्योपासनकर्म ॥

अरण्ये समित्पाणिः सन्ध्यामास्ते नित्यं वाग्यत उत्तरापराभिमुखोऽन्वष्टमदेशमा नक्षत्राणां दर्शनात् ॥१॥ अतिक्रान्तायां महाव्याहृतीः सावित्रीं स्वस्त्ययनानि च जपित्वा ॥२॥ एवं प्रातः प्राङ्मुखस्तिष्ठन्ना मण्डलदर्शनात् ॥३॥ उदिते[3] प्राध्ययनम् ॥४॥

इति नवमः खण्डः ।

## ॥ अथ अग्निकार्यम् ॥

अहरहः सायंप्रातः ॥१॥ अग्निमुपसमाधाय परिसमुह्य पर्युक्ष्य दक्षिणं जान्वाच्य ॥२॥

"अग्नये[4] समिधमहार्षं[5] बृहते[6] जातवेदसे ।
स मे श्रद्धां च मेधां च[6] जातवेदा प्र यच्छतु स्वाहा[6] ॥
एधोऽस्येधिषीमहि,[7] समिदसि,[8] तेजोऽसि,[9] तेजो[10] मयि धेहि स्वाहा ।

1. ऋमं १, १८, ६; माम ३२, १३ 2. प्रत्यृच इति BMS. अपपाठः 3. सर्वत्र मूलकोषेषु दशमखण्डस्यादिमसूत्रत्वेन पठितम् तु. OGN. पाठक्रमः 4. कम्मे इति RW. (शोमं १६, ६४, १) शोधोऽस्मंगन तु. अग्नये इति साधीयान् पाठ इति OEN. OGN. 5. मामम १, ६, ३२; आपमं २, ६, २; गोगृ २, १०, ४६ 5. ०माहार्षम् आगृ १, २१, १ 6. शौम १६, ६४, १ 7. मामं २०, २३; तैमं १, ४, ४५, ३; मैम १, ३, ३६ 8. मामं २, ५ 9. शौम ७, ८६, ४; मामं १, ३१; मैमं १, १, ११; काम १, १० 10. मामं १६, ६; तैमं ?, ४, ४५, ३; काम ४, १३; शबा १२, ६, २, १०; तैबा १, ६, ५, ६; आपमं २, ६, ५

सम्मिद्धो[1] मां समर्धय प्रजया[2] च धनेन च स्वाहा ॥
एषा[3] ते अग्ने समित्तया वर्धस्व चा च प्यायस्व ।
वर्धिषीमहि[4] च वयमा च प्यासिषीमहि स्वाहेति" ॥३॥ अथ पर्युक्ष्य ॥४॥
"अग्निः श्रद्धां[5] च मेधां चाऽविनिपातं स्मृतिं च मे ।
ईडितो[6] जातवेदा अयं शुनन्नः संप्र यच्छत्त्विति" ॥
अग्निमुपतिष्ठते ॥५॥ सौपर्णव्रतभाषितं॰ दृष्ट्वं वृद्धसम्प्रदायानुष्ठि
त्र्यायुषं पञ्चभिर्मन्त्रैः प्रतिमन्त्रं ललाटे हृदये दक्षिणस्कन्धे वामे च त
पृष्ठे च पञ्चसु भस्मना त्रिपुण्ड्रं करोति ॥६॥ स एतेषां वेदनामेकं द्वौ त्रीं
सर्वान् वाऽधीते य एवं हुत्वाग्निमुपतिष्ठते ॥७॥

इति दशमः खण्डः ।

## ॥ अथ शुक्रियव्रतकर्म ॥

अथ व्रतादेशनम् ॥१॥ तस्योपनयनेन कल्पो व्याख्यातः ॥२॥
सावित्रीमन्वाह ॥३॥ दण्डप्रदानान्तमित्येके ॥४॥ उदगयने शुक्लपक्षे ॥५
अहोरात्रं ब्रह्मचर्यमुपेत्याऽऽचार्योऽमांसाशी ब्रह्मचारी ॥६॥ चतुर्दशीं परिह
प्याष्टमीं च ॥७॥ आद्योत्तमे चैके ॥८॥ यां वान्या मप्रशस्तां मन्येत तस्
शुक्रिये ब्रह्मचर्यमादिशेत् ॥९॥ त्रिरात्रं ब्रह्मचर्यं चरेद् द्वादशरात्रं संवत्स
वा यावद् वा गुरुर्मन्येत ॥१०॥ शाक्वरं तु संवत्सरम् ॥११॥ आतिकर्मा
निपदं च ॥१२॥ पूर्णे काले चरिते ब्रह्मचर्ये शंयोर्बार्हस्पत्यान्ते[8] वेदेऽनु
रहस्यं श्रावयिष्यनकालनियमं चाऽऽदेशेन प्रतीयेत ॥१३॥

इति एकादशः खण्डः ।

1, काण्वसं ३, ३, २८ 2, शौसं ७, ३३, १; कासं २, ६, ७; मानुषा च वनेन च मा
१४, १८, १ 3. मसं २, १४; शाखा १, ८, २, ४; काश्रौ ३, ४, ६; भास्वं २, ६, ११ 4. मसं २.
तु. मैसं ४, १, १० 5. स्वरान्तंशो मन्त्रः । 6. BMS. ईडितो 7. Haug मूलकोषेषु शौवत्रमो रा
च नर्पित व OEN 8 OMS [illegible]

## ॥ अथ उद्दीक्षणिका ॥

कृतप्रातराशस्याऽपराह्णेऽपराजितायां[1] दिशि ॥१॥ हुत्वाऽऽचार्योऽथैनं यास्वेव देवतासु परीत्तो[2] भवति तास्वेवैनं पृच्छति "अग्नाविन्द्र[3] आदित्ये विश्वेषु च देवेषु चरितं ते ब्रह्मचर्य्यम् ॥२॥ चरितं भो ३ इति" प्रत्युक्ते ॥३॥ पश्चादग्नेः पुरस्तादाचार्यस्य प्राङ्मुखे स्थितेऽहतेन वाससाऽऽचार्य्यः प्रदक्षिणं मुखं त्रिः परिवेष्ट्य ॥४॥ उपरिष्टाद्दशाः कृत्वा यथा न संभ्रश्येत ॥५॥ त्रिरात्रं[3] समिदाधानं भिक्षाचरणमधःशय्यां गुरुशुश्रूषां चाऽकुर्वन्वाग्यतो ऽप्रमत्तोऽरण्ये देवकुलेऽग्निहोत्रे वोपवसत्येवेति ॥६॥ अत्र हैके तानेव नियमांस्तिष्ठतो रात्र्यामेवोपदिशन्ति ॥७॥ आचार्य्योऽमांसाशी ब्रह्मचारी ॥८॥ त्रिरात्रे निवृत्ते[4] रात्र्यां वा ग्रामान्निष्क्रम्यैतानीक्षेतानध्यायान् ॥९॥ पिशिताम[5] चण्डालं सूतिकां रजस्वलां तदनिमपहस्तकाँ श्मशानं सर्वाणि च शवरूपाणि यान्यास्ये न प्रविशेयुः स्वस्य वासान् निरसन् ॥१०॥ प्रागुदीच्याँ[6] दिशमुपनिष्क्रम्य शुचौ देशे प्राङ्मुख आचार्य उपविशति ॥११॥ उदित आदित्येऽनुवाचनधर्म्मेण वाग्यतायोष्णीषिणेऽन्वाह ॥१२॥ महानाम्नीष्वेवैष नियमः ॥१३॥ अथोत्तरेषु प्रकरणेषु स्वाध्यायमेव कुर्वत आचार्यस्येतरः शृणोति ॥१४॥ उष्णीषं[7] भाजनं दक्षिणां गां ददाति ॥१५॥ त्वं[8] तमिति, उच्चा[9] दिवीति च प्रणवेन वा सर्वम् ॥१६॥ अत्र हैके वैश्वदेवं चरुं कुर्वते सर्वेषु प्रकरणेषु ॥१७॥ यथापरीत्तमिति माण्डूकेयः ॥१८॥

इति द्वादशः खण्ड :

## ॥ अथ दण्डनियमाः ॥

अथातो दण्डनियमाः ॥१॥ न अन्तरा गमनं कुर्यादात्मनो दण्डस्य ॥२॥ अथ चेद्दण्डमेखलोपवीतानामन्यतमद्विशीर्य्येत छिद्येत वा तस्य

1. तु OEN. 2. BMS. परीतः 3. ग्नरा साथा श्रुतिः। 4. BMS, OMS. निवृत्ते 5 नु. OEN. BMS. विशितापन् 6. BMS. मन्त्रं नाग्नि 7. BMS. ०ष्णीषमाजन् 8. ऋग्वे १, १८, ५ 9. ऋग्वे १०, १००, २

तत्प्रायश्चित्तं यदुद्वाहे रथस्य ॥३॥ मेखला चेदसन्धेया भवत्यन्यां कृत्वानुमन्त्रयते ॥४॥

"मेध्यामेध्यविभागज्ञे[1] देवि[2] गोप्त्रि सरस्वति ।
मेखलेऽस्कन्नमच्छिन्नं संतनुष्व व्रतं मम ॥
त्वमग्ने[3] व्रतभृच्छुचिरग्ने[4] देवाँ इहाऽऽवह ।
उप[4] यज्ञं हविश्च नः ॥
व्रतानि[5] बिभ्रद् व्रतपा अदाभ्यो भवा[6] नो दूतो अजरः सुवीरः ॥
दधद्रत्नानि सुमृडीको[7] अग्ने, गोपाय[8] नो जीवसे जातवेद इति" ॥५॥

उपवीतं च दण्डे बध्नाति ॥६॥ तदप्येतत् ॥७॥

यज्ञोपवीतं[9] दण्डं च मेखलामजिनं तथा ।
जुहुयादप्सु व्रते पूर्णे वारुण्यर्चा रसेन वा ॥८॥

इति त्रयोदशः खण्डः ।

## ॥ अथ वैश्वदेवकर्म ॥

अथ वैश्वदेवः ॥१॥ व्याख्यातो होमकल्पः ॥२॥ वैश्वदेवस्य सिद्धस्य सायंप्रातर्गृह्येऽग्नौ जुहुयात् ॥३॥

"अग्नये स्वाहा,[10] सोमाय[10] स्वाहा, इन्द्राग्निभ्यां[10] स्वाहा, विष्णवे[11] स्वाहा,[10] भरद्वाजधन्वन्तरये[12] स्वाहा, विश्वेभ्यो[13] देवेभ्यः स्वाहा, प्रजापतये[12] स्वाहा,[12] अदितये[12] स्वाहा, अनुमतये[12] स्वाहा, अग्नये स्विष्टकृते[13] स्वाहेति" हुत्वैतासां देवतानाम् ॥४॥ अथ वास्तुमध्ये बलिं हरेद् एताभ्यश्चैव[14] देवताभ्यः

1. स्वशाखीयो मन्त्रः 2. BMS. मेधि देवि स्र० 3. तैब्रा २, ४, १, ११; शांश्रौ ३, ५, ६; 4. ऋमं १, १२, ३; १०; शौसं २०, १०१, ३; सर्वशाखीयः पाठः 5. मत्रा नु बिभ्रद् व्रतपा भद्रपः मैसं ४, ११, ४; तैब्रा निर्दि. स्थ.। 6. शांश्रौ निर्दि. स्थ.। 7. सुविदत्रो तैब्रा निर्दि. स्थ.। काश्रौ ३, १२, १४ 8. मैसं निर्दि. स्थ. 9. तु. जैगृ १, १२ 10. सर्वशाखीया श्रुतिः। 11. BMS. विश्वरूपे 12. स्वशाखीया श्रुतिः। 13. BMS. पाठो नास्ति। ऋमं २२, २८; वाजुषी श्रुतिः 14. BMS. देवताभ्यश्च

"नमो ब्रह्मणे ब्राह्मणेभ्यश्च, वास्तोष्पते[1] प्रति जानीह्यस्मानिति" वास्तुमध्ये वास्तोष्पतये च ॥५॥ अथ दिशां प्रदक्षिणं यथारूपं बलिं हरति ॥६॥

"नम[2] इन्द्रायैन्द्रेभ्यश्च नमो[2] यमाय याम्येभ्यश्च, नमो[2] वरुणाय वारुणेभ्यश्च, नमः[2] सोमाय सौम्येभ्यश्च, नमो[2] बृहस्पतये बार्हस्पत्येभ्यश्च" ॥७॥ अथाऽऽदित्यमण्डले "नमोऽदित्य[2] आदित्येभ्यश्च, नमो[2] नक्षत्रेभ्य ऋतुभ्यो मासेभ्योऽर्द्धमासेभ्योऽहोरात्रेभ्यः संवत्सरेभ्यः" ॥८॥ "पूष्णे[3] पथिकृते धात्रे विधात्रे मरुद्भ्यश्चेति" देहलीषु[4] ॥९॥ "विष्णवे"[5] दृषदि ॥१०॥ "वनस्पतय[2] इति" उलूखले ॥११॥ "ओषधीभ्य[2] इति" ओषधीनां स्थाने ॥१२॥ "पर्जन्यायाद्भ्य[2] इति" मणिके ॥१३॥ "नमः[2] श्रियै" शय्यायां शिरसि पादतः "भद्रकाल्यै"[2] ॥१४॥ अनुगुप्ते देशे "नमः[6] सर्वान्नभूतये" ॥१५॥ अथान्तरिक्षे "नक्तञ्चरेभ्य[2] इति" सायम्, "अहश्चरेभ्य[2] इति" प्रातः, "ये देवास[7] इति" च ॥१६॥ अविज्ञाताभ्यो देवताभ्य उत्तरतो धनपतये च ॥१७॥ प्राचीनावीती दक्षिणतः शेषन्निनयति "ये[8] अग्निदग्धा इति" ॥१८॥ देवपितृनरेभ्यो दत्त्वा श्रोत्रियं भोजयेत् ॥१९॥ ब्रह्मचारिणे वा भिक्षां दद्यात् ॥२०॥ अनन्तरं[9] सांवासिनीं[10] गर्भिणीं कुमारान् स्थविरांश्च भोजयेत् ॥२१॥ श्वभ्यः श्वपचेभ्यश्च वयोभ्यश्चाऽऽवपेद् भूमौ ॥२२॥ इति नाऽनश्वचमश्नीयात् ॥२३॥ नैकः ॥२४॥ न पूर्वम् ॥२५॥ तदप्येतदृचोक्तम्[11] "मोघमन्नं[12] विन्दते अप्रचेता इति" ॥२६॥

इति चतुर्दशः खण्डः ।

---

1. ऋसं ७, ५४, १; मागृ २, ११, १९; आपमं २, १५, १८ 2. खमार्गेषा श्रुतिः । 3. तु- OGN. 4. OMS. देहलिषु 5. तु- विष ६७, १२ 6. OMS. 'सर्वा भू०' 'सर्वान् भूतये; सर्वान्' ।
7. ऋसं १, १३९, ११ 8. ऋसं १०, १५, १४; शौसं १८, २, ३५ 9. तु- PW., Buhler कोष ५, २५ 10. OMS. सौवासिनीः 11. BMS. पाठो नास्ति 12. ऋसं १०, ११७, ६

## ॥ अथ षडर्घ्यकर्म ॥

षण्णां चेदर्घ्याणामन्यतम[1] आगच्छेद्गोपशुमजमन्नं वा यत् सामान्यतमं मन्येत तत्कुर्यात् ॥१॥ नामांसोऽर्घः[2]स्यात् ॥२॥ अधियज्ञमधिविवाहं कुरुतेत्येव ब्रूयात् ॥३॥ आचार्यायाऽऽग्नेयः[3] ॥४॥ ऋत्विजे बार्हस्पत्यः ॥५॥ वैवाह्याय प्राजापत्यः ॥६॥ राज्ञ ऐन्द्रः ॥७॥ प्रियाय मैत्रः ॥८॥ स्नातकायैन्द्राग्नः ॥९॥ यद्यप्यसकृत् संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाऽकृतार्घ्याः ॥१०॥ तदपि भवति ॥११॥

इति पञ्चदशः खण्डः ।

## ॥ अथ पशुकर्म ॥

मधुपर्के च सोमे[4] च पितृदैवतकर्म्मणि ।
अत्रैव[5] पशवो हिंस्या नाऽन्यत्रेत्यब्रवीन्मनुः ॥१॥
आचार्यश्च पिता चोभौ सखा चाऽनतिथिर्गृहे ।
ते यद्विदध्युस्तत् कुर्यादिति धर्मो विधीयते ॥२॥
नैकग्रामीणमतिथिं[6] विप्रोष्याऽऽगतमेव च ।
उपस्थितं गृहे विद्याद् भार्या यत्राऽग्नयोऽपि वा ॥३॥
अग्निहोत्रं बलिवर्दाः काले चातिथिरागतः ।
बालाश्च कुलवृद्धाश्च निर्दहन्त्यपमानिताः ॥४॥
अनड्वानग्निहोत्रं च ब्रह्मचारी च ते त्रयः ।
*अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम् ॥५॥*
देवताः पुरुषं गृह्य अहरहर्गृहमेधिनम् ।
भागार्थमुपसर्पन्ति ताभ्यो निर्वप्तुमर्हति ॥६॥

इति षोडशः खण्डः ।

---

1. तु. शांश्रौ ४, २१, १ तु. OEN. 2. तु. पगृ १, ३, २६-३० 3. BMS. पाठो नास्ति
4. मनु ५, ४१; यज्ञे इति पाठभेदः 5. OMS. तत्रैव 6. OMS. हिंस्यन् 7. OMS. नैकग्रामीयन्, नैकग्रामेय

## ॥ अथ अतिथिकर्म ॥

तृणान्यप्युञ्छतो नित्यमग्निहोत्रं च जुह्वतः ।
सर्वं सुकृतमादत्ते ब्राह्मणोऽनर्चितो वसन् ॥१॥
ओदपात्रात्तु[1] दातव्यमा[2] काष्ठाज्जुहुयादपि ।
आ सूक्तादाऽनुवाकाद्वा ब्रह्मयज्ञो विधीयते[3] ॥२॥
नोपवासः प्रवासे स्यात् पत्नी धारयते व्रतम् ।
पुत्रो भ्राताऽथवा पत्नी शिष्योवाऽस्य बलिं हरेत् ॥३॥
वैश्वदेवमिमं ये तु सायंप्रातः प्रकुर्वते ।
ते अर्थैरायुषा कीर्त्या प्रजाभिश्च समृध्नुयुरिति ॥४॥

इति सप्तदशः खण्डः ।

## ॥ अथ प्रवत्स्यद्ब्रह्मचारिकर्म[4] ॥

ब्रह्मचारी प्रवत्स्यन्नाचार्य्यमामन्त्रयते ॥१॥ "प्राणापानयोरिति"[5]
उपांशु । "ओमहं वत्स्यामि[4] भो३ इति" उच्चैः ॥२॥
"प्राणापाना[5] उरुव्यचास्त्वया प्र पद्ये[4] देवाय[6] त्वा गोप्त्रे परि ददामि,
देव[7] सवितरेष ते ब्रह्मचारी, तं[8] ते परि ददामि,
तं गोपायस्व,[9] तं मा मृधस्वेति"[10] ॥
उपांशु ॥३॥ "ॐ स्वस्ती" त्युच्चैराचार्य्यः-स्वस्तीत्युच्चैराचार्य्यः ॥४॥

इत्यष्टादशः खण्ड. ।

## इति[11] शाङ्खायनगृह्यसूत्रे द्वितीयोऽध्यायः

1. OMS. उदपात्रात् BMS. उदपात्रात्तु 2. OMS. प्रदातव्यम् 3. तु. आगृ ३, १० ४ 4. प्रवत्स्यामि इति OEN. शोध. । 5. तु. आगृ ३, १०, ६ 6. देवाय सवित्रे परिददामि आगृ निर्दि. स्थ. 7. तु. आगृ १, २०, ७; मागृ १, २२, ५ 8. तु. हिगृ १, ७, १० 9. कामं ३१, १०; 'तं गोपाय' आपमं २, ३, ३१; आगृ नापू. स्थ. 10. BMS. मृधः 11. BMS. इति गृह्यसूत्रे । OMS. द्वितीयोऽध्यायः

## ॥ अथ समावर्तनम् ॥

स्नानं समावर्त्स्यमानस्य ॥१॥ आनडुहमित्युक्तं[1] तस्मिन्नुपवेश्य केश-श्मश्रूणि वापयति लोमनखानि[2] च ॥२॥ व्रीहियवैस्तिलसर्षपैरपामार्गैः सदा-पुष्पीभिरित्युद्वाप्य ॥३॥ आपोहिष्ठीयेनाऽभिषिच्य[3] ॥४॥ अलंकृत्य ॥५॥ "युवं वस्त्राणीति[4]" वाससी परिधाय ॥६॥ अथाऽस्मै निष्कं बध्नाति "आयुष्यं[5] वर्चस्यम ॥७॥ "ममाग्ने[6] वर्च इति" वेष्टनम् ॥८॥ "गृहं[7] गृहमहनेति" छत्रम् ॥९॥ "आ रोहतेति[8]" उपानहौ ॥१०॥ "दीर्घस्ते[9] अस्त्वङ्कुश इति" वैण्वं दण्डमादत्ते ॥११॥ प्रतिलीनस्तदहरासीत ॥१२॥ "वनस्पते[10] वीड्वङ्गः शास[11] इत्येति" रथमारोहेत्[12] ॥१३॥ यत्रैनं गवा वा पशुना वा अर्हयेयुस्त-स्पूर्वमुपतिष्ठेत ॥१४॥ गोभ्यो व समावर्तेत फलवतो वा वृक्षात् ॥१५॥ "इन्द्र[13] श्रेष्ठानि द्रविणानि धेहि" "स्योनापृथिवि[14] भवेति" अवरोहति ॥१६॥ ईप्सितमन्नं[15] तदहर्भुञ्जीत ॥१७॥ आचार्याय वस्त्रयुगं दद्यादुष्णीषं मणि-कुण्डलं दण्डोपानहं छत्रं च ॥१८॥

इति प्रथमः खण्डः ।

## ॥ अथ गृहकर्म ॥

अगारं कारयिष्यन् "इहाऽश्रायाय विशः[16] परिगृह्णामीति" उदुम्बर-शाखया त्रिः परिलिख्य मध्ये स्थण्डिले जुहोति ॥१॥

---

1. तु. शांश्रौ ४, १६, २ 2. OMS. PMS. लोमनखानि 3. ऋसं १०, ९ 4. ऋसं १, १५२, १ 2. मासं ३४, ५० 6. ऋसं १०, १२८, १ 7. ऋसं १, १२३ ४; OMS. गृहमहनेति 8. ऋसं १०, १८, ६ 9. ऋसं ८, १७, १० 10. ऋसं ६. ४७, २६; OMS. नास्ति 11. ऋसं १०, १५२, १ 12. BMS. रथमारोहेत् 13. ऋसं २, २१, ६ 14. ऋसं १, २२, १५ 15. BMS. उपोहणेप्सितमन्नम् 16. स्वरास्येषा श्रुतिः ।

"कोऽसि कस्याऽसि[1] काय[2] ते ग्रामकामो जुहोमि स्वाहा,
अस्यां देवानामसि भागधेयमितः प्रजाताः पितरः परेताः,
विराडजुह्वद्[3] ग्रामकामो न देवानां किञ्चानान्तरेण स्वाहेति" ॥२॥
स्थूणागर्तान् खानयित्वा[4] ॥३॥ उदमन्थानासिच्य ॥४॥
"इमां[5] वि मिन्वे अमृतस्य शाखां मधोर्धारां[6] प्रतरणीं वसूनाम्।
एनां[7] शिशुः क्रन्दत्या कुमार एनां धेनुः क्रन्दतु नित्यवत्सेति" ॥
उदुम्बरशाखां घृतेनाऽक्तां दक्षिणे द्वार्ये गर्ते निदधाति ॥५॥
इमामुच्छ्रयामि[6] भुवनस्य शाखां मधोर्धारां प्रतरणीं वसूनाम् ।
एनां शिशुः[8] क्रन्दत्या कुमार एनां धेनुः क्रन्दतु पाकवत्सेति" ॥
उत्तरतः ॥६॥ एवं द्वयो-र्द्वयोर्दक्षिणतः पश्चादुत्तरतश्च ॥७॥
"इमामश्मस्य[9] वृक्षस्य शाखां घृतमुक्षन्तीममृते मिनोमि ।
एनां शिशुःक्रन्दत्या कुमार आ[9] स्यन्दन्तान्धेनवो नित्यवत्सा इति" ॥
स्थूणाराजमुच्छ्रयति ॥८॥
"एन[10] कुमारस्तरुण आ[11] वत्सो भुवनस्परि[10] ।
एनं परिस्रुतः कुम्भ्या आ[11] दध्नः कलशैर्गमन् ॥९॥

इति द्वितीयः खण्डः ।

"इहैव[12] स्थूणे प्रति तिष्ठ ध्रुवाऽश्वावती गोमती सीलमावती[13] ।
क्षेमे तिष्ठ[14] घृतमुक्षमाणेहैव तिष्ठ निमिता तिल्वला[15] स्थाजिरावती ॥

1. मान ७, २६; काठकम ६, १, ४ शमा ४, ५, ६, ४  2. स्वशाखीया श्रुतिः  3. OMS. विराड् जुह्वाम, विराजजुह्वन्  4. BMS. खादयित्वा  5. BMS. इमम् । स्वशाखीया श्रुतिः  6. तु. पागृ ३, ४, ४  7. तु. आगृ २, ८, १६ पागृ निर्दि. स्थ.  8. OMS. शिशुः क्रन्दत्याः  9. तु. आ धेनवः सायमास्य-न्दमानाः शौगृ ३, १२, ३  10. आपम २, १५, ४; तु. मागृ निर्दि. स्थ. पागृ निर्दि. स्थ. हिगृ १, २७, ४; मागृ २, ११, १२; तु. ZAL पृ. २८१ OMS. भुवन् नस्परि  11. आवत्सो जगता सह हिगृ, मागृ, मापम, पक. नागृ. स्थ. । आवत्सो जायतां सह आगृ न पृ. स्थ. आवत्सो जगदैः सह पागृ. नागृ. स्थ.  12. तु. शौगृ ३, १२, ३; तु. हिगृ १, २७, ३  13. OMS. शीलमावतीः । सूनृतावती इति शौगृ ३, १२, २; पागृ २, १७, ६; हिगृ निर्दि. स्थ. तु. OEN.  14. तिष्ठाति शौगृ; तिष्ठतु पागृ; तिष्ठति हिगृ पक. निर्दि. स्थ.  15. आपम २, १५, ३; तु. आगृ निर्दि. स्थ. पागृ निर्दि. स्थ.

मध्ये पोषस्य तृम्पतां मा त्वा प्रापन्नघायवः ॥
उपहूता[1] इह गाव उपहूता अजावयः
अथो अन्नस्य की[2]लाल उपहूतो गृहेषु नः ।
रथन्तरे[3] प्रति तिष्ठ वामदेव्ये[3] श्रयस्व बृहति स्तभायेति" ॥

स्थूणाराजमभिमृशति ॥१॥ संमितस्य स्थूणाः संमृशति ॥२॥ "सत्यं च श्रद्धा चेति" पूर्वे ॥३॥ "यज्ञश्च[4] दक्षिणा चेति" दक्षिणे ॥४॥ "बलं[5] चौजश्चेति" अपरे ॥५॥ "ब्रह्म[6] च नक्षत्रश्चेति" उत्तरे ॥६॥ "श्री स्तूप[7]:, धर्मस्थूणाराजः[8]" ॥७॥ अहोरात्रे[9] द्वारफलके" ॥८॥ "संवत्सरोऽ[6]पिधानम्" ॥९॥ "उरुगा[10] समुद्र इति" अभ्यक्तमश्मानं स्तूपस्याधस्तान्निखनेत् ॥१०॥

इति तृतीयः खण्डः ।

## ॥ थ गृहप्रवेशकर्म ॥

वास्तोष्पतीये कर्मणि ॥१॥
"अग्निं[11] दधामि मनसा शिवेनाऽयमस्तु संगमनो वसूनाम् ।
मा नो हिंसीः स्थविरं मा कुमारं शन्नो भव द्विपदे शं चतुष्पद इति" ॥

गृहमग्निं ग्राहत उपसमाधाय ॥२॥ प्रागग्रेषु नवेषु कुशेषूदकुम्भं नवं प्रतिष्ठाप्य ॥३॥ "अरष्टा[12] अस्माकं वीरा, मा[13] परा सेचि नो धनमिति"

---

1. शौनं ७, ६०, ५; मानं ३, ४३; लाश्रौ ३, ३, १; आपश्रौ ६, २७, ३ 2. यो रमः लाश्रौ निर्दि. स्थ. 3. तु. रथन्तरे प्रदस्व स्वाहा नैबा ३, ७, १०, १; आपश्रौ १४, ३१, १ 4. OMS. महान् । सत्यं च मे श्रद्धा च मे मानं १८, ५; नैमं ४,७, २, १; मैमं २, ११, ३ 5. तु मापगृ. ७, १७, ६ 6. स्वराहलंशा मुनिः । 7. तु. शौनं ६, ७, ६ 8. यो ते स्तूपः मानं २, १५, ११; मापगृ नागृ. स्थ. 9. धर्मगे स्थूणाराजः मानं २, १५, १०; तु पगृ ३, ४, १८ 10. ऋग्वं ५, ४७, ३ 11. तु. अग्निं प्र याश्नि शांगृ १, ७, ६ 12. अरिष्टा अस्माकं वीरा. सन्तु. आपश्रौ १३, १८, १ मानं २, १५, १६ 13. मा परा सेचि नः स्वम् आपश्रौ १३, १८, १; मा परा सेचि मत् पयः काश्रौ २५, ५, २८; आपश्रौ ४, १४, ४; मा परा सेचि मे धनम् मानं नागृ. स्थ.

अभिमन्त्र्य ॥४॥ रथन्तरस्य स्तोत्रियेण पुनरादायं ककुप्कारं तिस्रः पूर्वाह्णे जुहोति ॥५॥ वामदेव्यस्य मध्यन्दिने ॥६॥ बृहतोऽपराह्णे ॥७॥ महाव्याहृतयश्चतस्रः "वास्तोष्पत[1] इति" तिस्रः "अमीवहा[2] वास्तोष्पते, वास्तोष्पते[3] ध्रुवा स्थूणा" सौविष्टकृती दशमी स्थालीपाकस्य रात्रौ ॥८॥ ज्येष्ठं पुत्रमादाय जायां च सहधान्यः प्रपद्येत ॥९॥

"इन्द्रस्य[4] गृहाः शिवा वसुमन्तो वरूथिनस्तानहं प्रपद्ये सह जायया सह प्रजया सह पशुभिः सह रायस्पोषेण सह यन्मे किञ्चास्ति तेन ॥१०॥

इति चतुर्थः खण्डः ।

शर्मं[5] शर्मं शिवं-शिवं क्षेमाय वः शान्त्यै प्रपद्ये, अभयं[6] नो अस्तु । ग्रामो माऽरण्याय परि ददातु विश्व[7] महाय मा परि देहीति" ॥

ग्रामान्निष्क्रामन् ॥१॥ "अरण्यं मा ग्रामाय परि ददातु, मह[7] विश्वाय मा परि देहीति" ग्रामं प्रविशन्नरिक्तः ॥२॥

"गृहान्[8] भद्रान्सुमनसः प्रपद्ये वीरघ्नो[9] वीरतरः सुवीरान्[9] ।
इरां वहन्तो[10] घृतमुक्षमाणा[11] अन्येष्वहं[12] सुमनाः संविशेयमिति" ॥
सदा प्रवचनीयः ॥३॥

इति पञ्चमः खण्डः ।

---

1. ऋग्वे ७. ५४, १—३ 2. ऋग्वे ७, ५५, १; ७ 3. ऋग्वे ८, १७, १४; 4. काग्रं २, ५; त त्वा प्रपद्ये शौसं ५, ६, ११—१४; तैब्रा ३, ४, २, ४; तैआ ४, ४२, २; आपश्रौ १४, २६. १ 5. स्वशाखीय श्रुति । 6. मैस ४, ६, २७; काम ३७, १०; शांश्रौ १, ४, ५ 7. तु. आश्रौ २, ५, १७; आपश्रौ १६, १६, ४; अ.पमं १,८, २ 8. वीरवनः अ श्रौ निर्दि. स्थ. 9. सुरेवान् हिगृ १, २१, २ 10. वहन्तो आश्रमं, निर्दि. स्थ. वहन्ती मागृ १, १४, ६ 11 OMS. मुक्षमाणान् 12. तेष्वहं सुमनाः संविशामि आश्रौ २, ५ १७; मित्रेण स क मद मविशन्तु भगृ २, ६, ५

## ॥अथ प्रवसद्यजनम् ॥

अनाहिताग्निः प्रवत्स्यन् गृहान् समीक्षते ॥१॥
"इमान्[1] मे मित्रावरुणौ गृहान्[1] गोपायतं युवम्।[2]
अविनष्टानविह्न तान्[3] पूषैनानभि[4] रक्षतु।
आऽस्माकं पुनरागमान्" ॥२॥"अपि[5] पन्थामगन्महीति" च जपति ॥३॥

इति षष्ठः खण्डः।

अथ प्रोष्याऽऽयन् गृहान् समीक्षते ॥१॥
"गृहा[6] मा विभीत मा वेपध्वमूर्जं[7] बिभ्रत एमसि।
ऊर्जं बिभ्रद्वः सुमनाः[8] सुमेधाः गृहानैमि[9] मनसा मोदमानः॥
येषामध्येति[10] प्रवसन्येषु सौमनसो[11] बहुः।
गृहानुप[12] ह्वयामहे ते[13] नो जानन्तु जानतः॥
उपहूता[14] इह गाव उपहूता[14] अजावयः।
अथोऽन्नस्य[14] कीलाल उपहूतो[14] गृहेषु नः ॥२॥
अयं[15] नो अग्निर्भगवानयं नो भगवत्तरः।
अस्योपसद्ये[17] मा रिषामाऽयं श्रेष्ठये[18] दधातु न[16] इति"।
गृहमग्निमुपस्थाय[20] ॥३॥ कल्याणीं वाचं प्रत्र् यात् ॥४॥

1. गृहान् कुरुतं कुरुत् मैसं १, ५, १४ 2. BMS. कुरो 3. OMS. अविह सन्, अविह्नन्, अविह्नन्। इमान् काश्री २, ५, २ 4. मैसं निर्दि. स्थ.। कासं ७, ३; काशी निर्दि. स्थ.। कासश्री ६, २४, ४ 5. ऋसं ६, ५१, १६; अपि पन्थामगन्महि मैसं १, २, ६, १; कासश्री १०, २४, २ 6. मसं ३, ४१ 7. वैनिहुन् लाश्री ३, ३, १; कासश्री ६, २७, ३; हिगृ १, २६, १ 8. वसुवनिः शौसं ७, ६०, १ 9. बिभ्रद्वसुः शांतिशिवः षष्ठः। दधत् सूनृतः वन्दमानः शौसं निर्दि. स्थ.। मोदमानः सुवर्चाः कासश्री १६, १६, ४; मनसा देवेन काश्री निर्दि. स्थ. 10. येषामध्येति प्रवसन् मगृ १, १४, ५ 11. सौमनसं मसं मगृ निर्दि. स्थ. 12. शौसं ७, ६०, ३ 13. तान्नस्तु पत्तु शौसं निर्दि. स्थ.। तान्नस्तापन् मगृ निर्दि. स्थ. 14. शौसं ७, ६०, ५ 15. मसं ३, ४३; काश्री निर्दि. स्थ. 16. तु. कौसू ८६, १३ 17. शब्र १४, ६, ४, २३; बृउ ६, ४, २३ 18. OMS. मैदे, मैत्रवे, मैदे 19. नो दद् ३, २, ७
20. BMS. गृहान्

"विराजो[1] दोहोऽसि विराजो[1] दोहमशीय ।
मयि[2] पद्यायै विराजो दोह इति" ॥ पाद्यप्रतिग्रहणः[3] ॥५॥

इति सप्तमः खण्डः ।

## ॥ अथ आग्रयणम् ॥

अनाहिताग्निर्नवं प्राशिप्यन्नाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यः स्वाहाकारेण गृह्येऽग्नौ जुहुयात् ॥१॥ "प्रजापतये[4] त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्यायेति" प्राशनार्थीयमभिमन्त्र्य ॥२॥

"भद्रान्नः[5] श्रेयः समनैष्ट देवास्त्वया व्वसेन[6] समशीमहि त्वा ।
स नो मयोभूः पितवा[7] विशस्व शन्नो भव द्विपदे शं चतुष्पद इति"
अद्भिरभ्युत्पिब्यँ स्त्रिः प्राश्नाति ॥३॥
"अमोऽसि[8] प्राण तदृतं ब्रवीम्यमोऽसि[9] सर्वाऽसि प्रविष्टः ।
स मे जरां रोगमपनुद्य[10] शरीरादमा[11] म एधि मृधा म इन्द्रेति ॥
हृदयदेशमभिमृशति ॥४॥ "नाभिरसि,[12] मा बिभीथाः, प्राणानां[13] ग्रन्थिरसि, मा विस्रस[14] इति" नाभिम् ॥५॥ "भद्र[15] कर्णेभिरिति" यथालिङ्गम् ॥६॥ "तच्चक्षुरिति"[16] आदित्यमुपस्थाय ॥७॥

इत्यष्टमः खण्डः ।

---

1. शाश्रौ ४, २१, ३; आगृ १, २४, २१ 2. पागृ १, ३, १२; शांश्रौ निर्दि. ख.। मम पद्याय वि राज आपमं २, ९, १३; मयि दोहः पद्यायै विराजः आगृ १, २४, २२; हिगृ १, १३, १; मयि विराजः कल्पताम् मागृ १, ९, ७ 3. PMS. ग्रहः ग्रहः BMS. पाद्यं प्रति० 4. आश्रौ २, ९, ६, 5. तैसं ५, ७, २, ४; सामम २, १, १३ 6. BMS. वशेन 7. देहूतभूयिष्ठः पादः 8. आश्रौ २, ६, १०; साममं २, १, १४ 9. अमासि सर्वानसि प्रविष्टः आश्रौ निर्दि. स्थ. 10 अपमृज्य साममं निर्दि. स्थ. 11. अनामयैधि मा रिषाम इन्द्रो कौसू ७४, २० 12. स्वशार्दया श्रुतिः 13. तैब्रा १०, ३७, १; मामम १ ६, २० 14. ॥ विस्रमोऽन्तक मामम निर्दि. स्थ.। स मा निस्रसः हिगृ १, ४, १२ 15. ऋसं १, ८९, ८ 16. ऋमं ७, ६६, १६

## ॥ अथ गोष्ठकर्म[1] ॥

"परि[1] वः सन्याद्वयाद्वया वृञ्जन्तु घोषियः[1] ।
समानस्तस्य गोपतेर्गावो अंशो न वो रिषत् ॥
पूषा[2] गा अन्वेतु न इति" गाः प्रतिष्ठमाना[3] अनुमन्त्रयेत ॥१॥
"परि पूषेति"[4] परिक्रान्तासु ॥२॥
"यासामूधश्चतुर्बिलं[5] मधोः पूर्णं घृतस्य च ।
ता नः सन्तु पयस्वतीर्बह्वीर्गोष्ठे घृताच्य इति" ॥
"आ[6] गावो अग्मन्निति" च प्रत्यागतासु ॥३॥ उत्तमाममा कुर्वन् ॥४॥
मयोभूर्वात इति" सूक्तेन गोष्ठे गताः ॥५॥

इति नवमः खण्डः ।

## ॥ थ गवामङ्गनकर्म ॥

या फाल्गुन्या उत्तराऽमावास्या सा रेवत्या संपद्यते तस्यामङ्कलक्षणानि कारयेत्[8] ॥१॥
"भुवनमसि[9] सहस्रपोषमिन्द्राय त्वा अमो[10] ददत् ।
अक्षतमरिष्टमिडाऽन्नं गोपायनं यावतीनामिदं[11] करिष्यामि
भूयसीनामुत्तमां समां क्रियासमिति" ॥२॥
या प्रथमा प्रजायेत तस्याः पीयूषं[12] जुहुयात् "संवत्सरीणं[13] पय उस्रियाया इति" एताभ्यामृग्भ्याम् ॥३॥ यदि यमौ प्रजायेत महाव्याहृतिभिर्हुत्वा यमवृं दद्यात् ॥४॥

इति दशमः खण्डः ।

---

1. सप्तर्षयो मन्त्रः । तु. शांश्रौ ४, २१, १ OGN. च 2. ऋसं ६, ५४, ५ 3. OMS. प्रतिष्ठमानाः. 4. ऋसं ६, ५४, १०; तैसं ७, ३, ४ 5. कात्यश्रौ ७, १०, १; मनु २, १०, ६ ऋखि १०, १७०, १ 6. ऋसं ६, २८, १ 7. ऋसं १०, १११ 8. BMS. करोत् 9. वैहायसः पदः । [illegible] ६, ५, ३; मानगृ १, ८, ५; 10. [illegible] मैसं ४, २, ६; [illegible] लिङ्गि. १४. तु. OGN. 11. तु. मैसं ४, २, ६ [illegible] लिङ्गि. १४. 12. [illegible] 13. ऋसं १०. ८७. १७; १८; तैसं ८, ३, १६; १७

"विराजो[1] दोहोऽसि विराजो[1] दोहमशीय।
मयि[2] पद्यायै विराजो दोह इति" ॥ पाद्यप्रतिग्रहणः[3] ॥५॥

इति सप्तमः खण्डः।

## ॥ अथ आग्रयणम् ॥

अनाहिताग्निर्नवं प्राशिष्यन्नाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यः स्वाहाकारेण गृह्येऽग्नौ जुहुयात् ॥१॥ "प्रजापतये[4] त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्यायेति" प्राशनार्थीयमभिमन्त्र्य ॥२॥

"भद्रान्नः[5] श्रेयः समनैष्ट देवास्त्वया व्वसेन[6] समशीमहि त्वा।
स नो मयोभूः पितवा[7] विशस्व शन्नो भव द्विपदे शं चतुष्पद इति"
अद्भिरभ्युक्षितपिण्डं त्रिः प्राश्नाति ॥३॥

"अमोऽसि[8] प्राण तदृतं ब्रवीम्यमोऽसि[9] सर्वानसि प्रविष्टः।
स मे जरां रोगमपनुद्य[10] शरीरादमा[11] म एधि मा मृधा न इन्द्रेति॥
हृदयदेशमभिमृशति ॥४॥ "नाभिरसि,[12] मा बिभीथाः, प्राणानां[13] ग्रन्थिरसि, मा विस्रस[14] इति" नाभिम् ॥५॥ "भद्रं[15] कर्णेभिरिति" यथालिङ्गम् ॥६॥ "तच्चक्षुरिति"[16] आदित्यमुपस्थाय ॥७॥

इत्यष्टमः खण्डः।

---

1. शाश्रौ ४, २१, ३; आगृ १, २४, २१ 2. पागृ १, ३, १२; शांश्रौ निर्दि. स्थ.। मय पद्याय वि राज आपमं २, ६, १३; मयि दोहः पद्यायै विराजः आगृ १, २४, २२; हिगृ १, १३, १; मयि विराजः कल्पताम् मागृ १, ६, ७ 3. PMS. ग्रहः ग्रहः BMS. पाद्यं प्रति० 4. आश्रौ २, ९, ९, 5. तैसं ५, ७, २, ४; सामम २, १, १३ 6. BMS. वसेन 7. पैङ्गलमूर्धिष्ठः पाठः 8. आश्रौ २, ९, १०; साममं २, १, १४ 9. अमासि सर्वानसि प्रविष्टः आश्रौ निर्दि. स्थ. 10 अपमृज्य साममं निर्दि. स्थ. 11. अनामयेधि मा रिषाम इन्द्रो कौसू ७४, २० 12. स्वशार्गीया श्रुतिः 13. तैमा १०, ३७, १; साममं १ ६, २० 14. मा विस्रमेऽन्तकः साममं निर्दि. स्थ.। स मा विस्रमः हिगृ १, ५, १२ ऋसं १, ८९, ८ 16. ऋसं ७, ६६, १६

## ॥ अथ गोष्ठकर्म ॥

"परि[1] वः सन्याद्वधाद्वया वृञ्जन्तु धोषिय:[1] ।
समानस्तस्य गोपतेर्गावो अंशो न वो रिषत् ॥
पूषा[2] गा अन्वेतु न इति" गाः प्रतिष्ठमाना[3] अनुमन्त्रयेत ॥१॥
"परि पूषेति"[4] परिक्रान्तासु ॥२॥
"यासामूधश्चतुर्बिलं[5] मधोः पूर्णं घृतस्य च ।
ता नः सन्तु पयस्वतीर्बह्वीर्गोष्ठे घृताच्य इति" ॥
"आ[6] गावो अग्मन्निति" च प्रत्यागतासु ॥३॥ उत्तमाममा कुर्वन् ॥४॥
मयोभूर्वात इति" सूक्तेन गोष्ठे गताः ॥५॥

इति नवमः खण्डः ।

## ॥ थ गवामङ्कनकर्म ॥

या फाल्गुन्या उत्तराऽमावास्या सा रेवत्या संपद्यते तस्यामङ्कलक्षणानि कारयेत्[8] ॥१॥
"भुवनमसि[9] सहस्रपोषमिन्द्राय त्वा श्रमो[10] ददन् ।
अक्षतमस्यरिष्टमिडाऽन्नं गोपायनं यावतीनामिदं[11] करिष्यामि
भूयसीनामुत्तमां समां क्रियासमिति" ॥२॥
या प्रथमा प्रजायेत तस्याः पीयूषं[12] जुहुयात् "संवत्सरीणं[13] पय उस्रियाया इति" एताभ्यामृग्भ्याम् ॥३॥ यदि यमौ प्रजायेत महाव्याहृतिभिर्हुत्वा यमम्नं दद्यात् ॥४॥

इति दशमः खण्डः ।

1. स्वस्त्यात्रेयो मन्त्रः । तु. शांश्रौ ४, १६, ६ OGN. च 2. ऋसं ६, ५४, ५ 3. OMS. प्रतिष्ठमाना. 4. ऋस ६, ५४, १०; शौसं ७, ६, ४ 5. आपश्रौ ७, १७, १; आगृ २, १०, ६ ऋखि १०, १७०, १ 6. ऋसं ६, २८, १ 7. ऋसं १०, १६६ 8. BMS. धारयेत् 9. वैराजद्रुतः पादः । सादृश्यन् माश्रौ ६, २, ३; मानसं १, ८, ५; 10. समोऽददात् मैसं ४, २, ६; माश्रौ स मनं यक्. निर्दि. स्थ. तु. OGN. 11. तु. मैसं ४, २, ६ माश्रौ निर्दि. स्थ. 12. पदनिरासेपोनमेत्व्यं पुनरोभवन्ति । 13. ऋसं १०, ८७, १७; १८; शौसं ८, ३, १६; १७

## ॥ अथ वृषोत्सर्गकर्म[1] ॥

अथ वृषोत्सर्गः ॥१॥ कार्त्तिक्यां पौर्णमास्यां रेवत्यां वाऽऽश्वयुज्यस्य ॥२॥ गवां मध्ये सुसमिद्धमग्निं कृत्वाऽऽज्याहुतीर्जुहोति ॥३॥ "इह रतिरिह रमध्वं स्वाहा, इह[2] धृतिरिह स्वधृतिः स्वाहा, उप[2] सृजं धरुणं मात्रे, धरुणो मातरं धयन् रायस्पोषमस्मासु[3] दीधरत् स्वाहा" ॥४॥

"वृषा[4] गा अन्वेतु न इति" पौष्णस्य जुहोति ॥५॥ रुद्रान्[5] जपित्वा ॥६॥ एकवर्णं द्विवर्णं त्रिवर्णं वा ॥७॥ यो वा यूथं छादयति ॥८॥ यो वा यूथेन छाद्यते ॥९॥ रोहितो वैव स्यात् ॥१०॥ सर्वाङ्गैरुपेतो यूथे वर्चस्वितमः स्यात् ॥११॥ तमलङ्कृत्य ॥१२॥ यूथे मुख्याश्चतस्रो वत्सतर्यस्ताश्चाऽलङ्कृत्य ॥१३॥

"एतं[6] युवानं पतिं वो ददामि तेन[7] क्रीडन्तीश्चरथ प्रियेण ।
मा[8] नः शप्त जनुषा संविदाना रायस्पोषेण[9] समिषा मदेम[10] स्वाहेति" ॥४॥

नभ्यस्थेऽनुमन्त्रयते "मयोभूरिति"[11] अनुवाकशेषेण ॥१५॥ सर्वासां पयसि पायसं ब्राह्मणान् भोजयेत्[12] ॥१६॥

इत्येकादशः खण्डः ।

## ॥ अथ अष्टकाः ॥

ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टका[13] अपरपक्षेषु ॥१॥ तासां प्रथमायां शाकं जुहोति ॥२॥

1. याजुषी श्रुति. 2. उपसृजन्...माम ८, ५१ 3. ऐब्रा ५, २२, १५; शब्रा ४, ६, ९, ९
4. ऋमं ६, ५४, ५; तैमं ४, १, ११, २ 5. ऋमं १, ४३; ११४; २, ३३; ७, ४६ 6. पागृ ३, ९, ६; तु. तैमं ३, ३, ९, १ 7. तु. शौमं ६, ४, २४ 8. तैमं पागृ यकः निर्दि. स्थ. । वैदिकत्वदुलः पाठः ।
9. मासं ४, १ 10. मदन्तः शौमं ३, १५, ८; मामं ११, ७८, तैमं ४, १. १०, १ 11. ऋमं १०, १६९ 12. काठगृ ५४, १-६ तु. पागृ ३, ९. १-१०; 13. काठगृ ६१, १-६; तु. OEN

"इयमेव[1] सा या प्रथमा [1]व्युच्छदन्तरस्यां[2] चरति प्रविष्टा ।
वधूर्जजान[3] नवकृज्जनित्री[4] त्रय एनां महिमानः सचन्तां स्वाहेति" ॥३॥

अथ स्विष्टकृतः ॥४॥

"यस्यां[5] वैवस्वतो यमः सर्वे देवाः समाहिताः ।
अष्टका सर्वतोमुखी सा मे कामानतीतृपन् ।
आहुते[6] ग्रावाणो दन्तानूधः पवमानः ।
मासाश्चाऽर्धमासाश्च नमस्ते सुमनामुखि[7] स्वाहेति" ॥५॥

इति द्वादशः खण्डः ।

मध्यमायां[8] मध्यावर्षे च ॥१॥ महाव्याहृतयश्चतस्रः "ये तातृपुरिति"[8] चतस्रोऽनुद्रुत्य वपां जुहुयात् ॥२॥

"वह[9] वपां[10] जातवेदः पितृभ्यो यत्रैनान् वेत्थ सुकृतस्य[11] लोके ।
मेदसः कुल्या उप[12] तान्स्रवन्तु[12] सत्याः सन्तु[13] यजमानस्य कामाः स्वाहेति।"

वा ॥३॥ महाव्याहृतयश्चतस्रः "ये[8] तातृपुरिति" चतस्रोऽष्टाहुति स्थालीपाकोऽवदानमिश्रः ॥४॥

"अन्तर्हिता[4] गिरयोऽन्तर्हिता पृथिवी मही मे ।
दिवा[14] दिग्भिश्च सर्वाभिरन्यमन्तः[15] पितुर्दधेऽमुष्यै स्वाहा ॥
अन्तर्हिता म ऋतवो अहोरात्राश्च सन्धिजाः ।
मासाश्चाऽर्धमासाश्चान्यमन्तः पितुर्दधेऽमुष्यै स्वाहेति ॥"

---

1. व्योच्छद् शौसं ३, १०, ४; मैसं ४, ३, ११, १; मैसं २, १३, १०; काठसं ३९, १० 2. चा-रिरात्तु चरति प्रविष्ट शौसं निर्दि. स्थ. 3. जिगाय शौसं; निनाय मैसं; काठसं दर. निर्दि. स्थ. 4. OMS. नवकृज्जनित्री 5. स्वरसंख्या त्रुटिः । 6. तु. आपमं २, २१, १ 7. तु. OEN. 8. आमं १०, १२, १-१२ 9. BMS. द्र. 10. मामं ३५, २०; सामनं २, ३, १८; आपमं २, २०, २८; मानृ २, ४, ११ 11. निदिशान् पराके मामं; आपमं वक. निर्दि. स्थ. 12. वैनान् मानृ; कमि त न् घरन्तु आपमं दह. निर्दि. स्थ. 13. संहतसोऽयो मन्त्रपाठः । 14. तु. दिवा दिग्भिरन्तर्विहिताभिः हिगृ २, १०, ७, 15. अहोरात्रैश्च सन्धिभिः आपमं २, १६, ६

"यास्तिष्ठन्ति याः स्रवन्ति[1] या[2] दध्राः परिसस्रुषीः ।
अद्भिः सर्वस्य[3] भर्तृभिरन्यमन्तः पितुर्दधेऽमुष्यै स्वाहा ॥
यन्मे माता प्रलुलुभे[4] विचरन्त्यपतिव्रता[5] ।
रेतस्तन्मे[6] पिता वृङ्क्तां मातुरन्योऽव[7] पद्यतामुष्यै स्वाहेति ॥"

या महाव्याहृतीनां स्थाने चतस्रोऽन्यत्रकरणस्य ॥५॥ पायसो वा चरुः ॥६॥ श्वोऽन्वष्टक्यं पिण्डपितृयज्ञावृता ॥७॥

इति त्रयोदशः खण्डः ।

उत्तमायामपूपाञ्जुहोति ॥१॥
"उक्थ्यश्चाऽतिरात्रश्च[8] सद्यःक्रीश्छन्दसा[9] सह ।
अपूपकृदष्टके[10] नमस्ते सुमनामुखि स्वाहेति" ॥२॥

गोपशुरजपशुः[11] स्थालीपाको वा ॥३॥ अपि[11] वा गोग्रासमाहरेत् ॥४॥ अपि वाऽरण्ये कक्षमपादहेत् "एषा मेऽष्टकेति"[12] ॥५॥ नत्वेव न कुर्वीत न त्वेव न कुर्वीत[11] ॥६॥

इति चतुर्दशः खण्डः ।

इति[13] शाङ्खायनगृह्यसूत्रे तृतीयोऽध्यायः

---

1. श्रवन्ति आपमं २, १६, २; आपगृ ८, २१, ९ 2. या आर्द्रोन्नीः परि तस्थुषीः आपमं निर्दि. स्थ. 3. विश्वस्य आपमं निर्दि. स्थ. 4. प्रममाद आपश्रौ १, ९, ९; प्रलुलोभ आपमं २, १९, १; हिगृ २, १०, ७ 5. चरत्यननुव्रता आपमं, हिगृ वक्र. निर्दि. स्थ. 6. तु. आपश्रौ निर्दि. स्थ. आपमं नागृ. स्थ. 7. मातुरन्योऽपपद्यतान् आपश्रौ निर्दि. स्थ. 8. आपमं २, २१, १; तु. तैब्रा ३, १०, १, ४ 9. तु. शौसं ११, ७ १० 10. अपूपस्तनाकुचे आपमं न.पू. स्थ. 11. BMS. रजस्थालीपाकः तु. गोगृ ४, १, २०-२२ 12. तु. मागृ २, ४, १; गोगृ ४, १, २१ 13. BMS. इति गृह्यसूत्रे तृतीयोऽध्यायः । OMS. तृतीयोऽध्यायः

## ॥ अथ श्राद्धकर्म[1] ॥

मासि-मासि[1] पितृभ्यो दद्यात् ॥१॥ ब्राह्मणान्[2] वेदविदोऽयुग्मांस्त्य-वरार्धान् पितृवदुपवेश्य ॥२॥ अयुग्मान्युदपात्राणि तिलैरवकीर्य ॥३॥ असावेतत्त इत्यनुदिश्य ब्राह्मणानां पाणिषु निनयेत् ॥४॥ अत[3] ऊर्ध्वमलङ्कृतान् ॥५॥ आमन्त्र्याऽग्नौ कृत्वाऽन्नं च ॥६॥ असावेतत्त इत्यनुदिश्य भोजयेत् ॥७॥ भुञ्जानेषु महाव्याहृतीः सावित्रीं मधुवातीयाः[3] पितृदेवत्याः पावमानीश्च जपेत् ॥८॥ भुक्तवत्सु पिण्डान् दद्यात् ॥९॥ पुरस्तादेके ॥१०॥ पिण्डान् परिचमेन तत्पत्नीनां किञ्चिदन्तर्धाय ॥११॥ ब्राह्मणेभ्यः शेषं निवेदयेत् ॥१२॥ अग्नौकरणादि पिण्डपितृयज्ञेन कल्पो व्याख्यातः ॥१३॥

इति प्रथमः खण्डः ।

## ॥ अथ एकोद्दिष्टश्राद्धकर्म[1] ॥

अथात एकोद्दिष्टम् ॥१॥ एकपवित्रम् ॥२॥ एकार्घ्यम् ॥३॥ एकपिण्डम् ॥४॥ नाऽऽवाहनं नाऽग्नौकरणं नात्र विश्वेदेवाः "स्वदितमिति"[4] तृप्तिप्रश्ने "उप तिष्ठतामिति"[5] अक्षय्यस्थाने[6] ॥५॥ "अभि रम्यतामिति"[7] विसर्गः ॥६॥ संवत्सरमेवं प्रेते ॥७॥ चतुर्थविसर्गश्च ॥८॥

इति द्वितीयः खण्डः ।

---

1. PMS. कं मासि॰ तु. काठक् ६६, ४  2. अदितस्सदं मन्वानो OEN. द.  3. तु. मनं १, १०, ६  4. BMS. कर्मो  5. स्वधात्वीया श्रुति  6. BMS. कर्षेण्य  7. तु. अभिरम्यताम् मामौ ८, २०

## ॥ अथ सपिण्डीकरणम् ॥

अथ[1] सपिण्डीकरणम् ॥१॥ संवत्सरे पूर्णे त्रिपक्षे वा ॥२॥ यदहर्वा वृद्धिरापद्येत॥३॥ चत्वार्युदपात्राणि सतिलगन्धोदकानि कृत्वा ॥४॥ त्रीणि पितृणामेकं प्रेतस्य ॥५॥ प्रेतपात्रं पितृपात्रेष्वासिञ्चति "ये समाना इति"[2] द्वाभ्याम् ॥६॥ एवं पिण्डमपि ॥७॥ एतत्सपिण्डीकरणम् ॥८॥

इति तृतीयः खण्डः ।

## ॥ अथ आभ्युदयिकश्राद्धकर्म ॥

अथात आभ्युदयिकम् ॥१॥ आपूर्यमाणपक्षे पुण्याहे ॥२॥ मातृयागं कृत्वा ॥३॥ युग्मान् वेदविदो ब्राह्मणानुपवेश्य[3]॥४॥ पूर्वाह्णे ॥५॥ प्रदक्षिणमुपचारः ॥६॥ पितृमन्त्रवर्जं जपः ॥७॥ ऋजवो दर्भाः ॥८॥ यवैस्तिलार्थः ॥९॥ दधिबदराक्षतमिश्राः पिण्डाः ॥१०॥ "नान्दीमुखान् पितृना वाहयिष्य इति" आवाहने॥११॥ "नान्दीमुखाः[4] पितरः प्रीयन्तामिति" अक्षय्यस्थाने ॥१२॥ "नान्दीमुखान्[4] पितॄन् वाचयिष्य इति" वाचने ॥१३॥ "संपन्नमिति"[5] तृप्तिप्रश्ने[6] ॥१४॥ समानमन्यदविरुद्धमिति ॥१५॥

इति चतुर्थः खण्डः ।

## ॥ अथ उपाकरणम् ॥

अथोपाकरणम् ॥१॥ ओषधीनां प्रादुर्भावे हस्तेन श्रवणेन वा ॥२॥ अक्षतसक्तूनां धानानां च दधिघृतमिश्राणां प्रत्यृचं वेदेन जुहुयादिति हैक आहुः ॥३॥ सूक्तानुवाकाद्याभिरिति वा ॥४॥ अध्यायार्षेयाद्याभिरिति[7]

---

1. तु. OEN. 2. मानं १६, ४५; ४६ 3. PMS. OMS. पाठो नास्ति 4. स्वशाखीया श्रुतिः 5. माश्रौ ११, ६, ३; तु. मागृ ४, ७, २७ 6. OMS. ०प्रश्नः 7. OMS. ०यार्षेयाद्याभिः

माण्डूकेयः ॥५॥ अथ ह स्माऽऽह कौषीतकिः ॥६॥ "अग्निमीळे[1] पुरोहितमिति" एका ॥७॥ "कुमुम्भकस्तदब्रवीत्"[10] "आवदँस्त्वं[2] शकुने भद्रमा वद, गृणाना[3] जमदग्निना, धामन्ते[4] विश्वं भुवनमधि श्रितं, गन्ता[5] नो यज्ञं यज्ञियाः सुशमि, यो[6] नः स्वो अरणः, प्रति[7] चक्ष्व वि चक्ष्व, आऽग्ने[8] याहि मरुत्सखा, यत्ते[9] राजञ् शृतं हविरिति"।

तृचाः ॥८॥ "तच्छंयोरा[11] वृणीमह इति" एका ॥९॥ हुतशेषाद्धविः प्राश्नन्ति "दधिक्राव्णो[12]अकारिषमिति" एतया ॥१०॥ आचम्योपविश्य ॥११॥ महाव्याहृतीः सावित्रीं वेदादिप्रभृतीनि स्वस्त्ययनानि च जपित्वा ॥१२॥ आचार्यं स्वस्तिवाच्य ॥१३॥ तदपि भवति ॥१४॥

अयातयामतां पूजां सारत्वं छन्दसां तथा ।
इच्छन्त ऋषयोऽपश्यन्नुपाकर्म तपोबलात् ॥१५॥
तस्मात् षट्कर्म नित्येनाऽऽत्मनो मन्त्रसिद्धये ।
उपाकर्तव्यमित्याहुः कर्मणां सिद्धिमिच्छता ॥१६॥
उपाकर्मणि[13] चोत्सर्गे त्रिरात्रं क्षपणं[14] भवेत् ।
अष्टकासु त्वहोरात्रमृत्वन्त्यासु च रात्रिषु ॥१७॥

इति पञ्चमः खण्डः ।

## ॥ अथ उत्सर्गकर्म ॥

माघशुक्लप्रतिपदि ॥१॥ अपराजितायां दिशि ॥२॥ बह्वोषधिके देशे ॥३॥ "उदु[15]त्यं जातवेदसम्, चित्रं[16]देवानाम्, नमो[17]मित्रस्य, सूर्यो[18] नो

1. ऋसं १, १, १ 2. ऋसं २, ४३, ३; कनृ ३, ५, ७ 3. ऋसं ३, ६२, १८; कौसं २, १४; काश्रौ ५, ५, १२; शांश्रौ ७, २, ७ 4. ऋसं कनृ निर्दि. स्थ. ऋसं ४, ५८, ११; तासं १७, ६६; वासं ४०, ७; काश्रौ २, १३, ७; कात्यश्रौ १७, १८, १ 5. ऋसं ५, ८७, ६; कनृ निर्दि. स्थ. 6. यो नः स्वो यो शौसं १, १६, ३; ऋसं ६, ७५, १९; कौसं २, १२२२; कनृ निर्दि. स्थ.। यो नः स्वः तैसौ ६. २१ 7. ऋसं ७, १०४, २५; शौसं ८, ४, २५ कनृ निर्दि. स्थ. 8. ऋसं ८, १०३, १४ 9. ऋसं १, ११४, ४ 10. कुटकुरराजसंघा कन्त्वा कत् तु. OEN. तैसं ७, ६, २०, २; मैसं १, ४, ७; 11. ऋसंहितान्ते ऋचः। ऋसं ४, ३९, ६ 12. मनु ४, ११९। क्षेपणमिति पाठभेदः। तु. याज्ञ ६, १४४, १४५; 13. ऋसं १, ५०, 14. ऋसं १; ११५ 15. ऋसं १०, ३०; 16. ऋसं १०, १५८ 17. ऋसं १, १९१, १९।

दिवस्पारिवति" सौर्याणि[1] जपित्वा ॥४॥ "शास[2] इत्था महाँ असीति" प्रदक्षिणं प्रत्यृचं प्रतिदिशं प्रत्यस्य लोष्टान् ॥५॥ ऋर्षीश्छन्दांसि देवताः श्रद्धामेधे च तर्पयित्वा प्रतिपुरुषं च पितॄन् ॥६॥ छन्दांसि विश्रामयन्त्यर्धसप्तमान्मासान् ॥७॥ अर्धषष्ठान् वा ॥८॥ अधीयीराँश्चेदहोरात्रमुपरम्य प्राध्ययनम् ॥९॥

इति षष्ठः खण्डः ।

## ॥ अथ उपरमकर्म ॥

अथोपरमम् ॥१॥ उत्पातेष्वाकालम्[3] ॥२॥ अन्येष्वद्भुतेषु च ॥३॥ विद्युत्स्तनयित्नु-वर्षासु त्रिसंध्यम् ॥४॥ एकाहं श्राद्धभोजने ॥५॥ दशाहमपस्तकेषु[4] च ॥६॥ चतुर्दश्यमावास्ययोरष्टकासु च ॥७॥ वासरेषु नम्येषु च ॥८॥ आचार्ये चोपरते दशाहम् ॥९॥ श्रुत्वा त्रिरात्रम् ॥१०॥ तत्पूर्वाणां च ॥११॥ प्रतिग्रहे श्राद्धवत् ॥१२॥ सब्रह्मचारिणि ॥१३॥ प्रेतमनु गत्वा ॥१४॥ पितृभ्यश्च निधाय पिण्डान् ॥१५॥ निशाम् ॥१६॥ संध्याम् ॥१७॥ पर्वसु ॥१८॥ अस्तमिते ॥१९॥ शूद्रसन्निकर्षे ॥२०॥ सामशब्दे[5] ॥२१॥ श्मशाने ॥२२॥ ग्रामारण्ये ॥२३॥ अन्तःशवे ग्रामे ॥२४॥ अदर्शनीयात् ॥२५॥ अश्रवणीयात् ॥२६॥ अनिष्टघ्राणे ॥२७॥ अतिवाते ॥२८॥ अभ्रे[6] प्रवर्षिणि ॥२९॥ रथ्यायाम् ॥३०॥ वीणाशब्दे च ॥३१॥ रथस्थः ॥३२॥ शूद्रवच्छुनि ॥३३॥ वृक्षारोहणे ॥३४॥ अवटारोहणे ॥३५॥ अप्सु ॥३६॥ क्रन्दति[7] ॥३७॥ आर्त्याम् ॥३८॥ नग्ने ॥३९॥ उच्छिष्टः ॥४०॥ संक्रमे ॥४१॥ केशश्मश्रूणि वापन आ स्नानात् ॥४२॥ उत्पादने ॥४३॥ स्नाने ॥४४॥ संवेशने ॥४५॥ अभ्यञ्जने ॥४६॥ प्रेतस्पर्शिनि सूतिकोदक्ययोश्च शूद्रवत् ॥४७॥ अपिहितपाणिः ॥४८॥

1. BMS. सर्पाणि 2. ऋग्वे १०, १५२ 3. OGN. शोभाः। तु OEN. पागृ २, ११, २; गोगृ ३, ३, १७; बागृ ८, ११; काठगृ १, ७; वाध १३ 4. BMS. अप 5. भूयसे निमशीव OEN. ६. 6. BMS. न वर्षिणि 7. PMS. क्रन्दत्।

सेनायाम् ॥४९॥ अभुञ्जाने ब्राह्मणे गोषु च ॥५०॥ अतिक्रान्तेष्वधीयीरन् ॥५१॥ एतेषां यदि किञ्चिदकामोत्पातो भवेत्प्राणानायम्याऽऽदित्यमीक्षित्वाऽधीयीत॥५२॥ विद्युत्स्तनयित्नुवर्षवर्जं कल्पे वर्षवदर्धषष्ठेषु॥५३॥ तदप्येतत् ॥५४॥

अन्नमापो मूलफलं यच्चान्यच्छ्राद्धिकं भवेत् ।
प्रतिगृह्याप्यनध्यायः पाण्यास्यो ब्राह्मणः स्मृतः[2] इति ॥५५॥

इति सप्तमः खण्डः ।

न्यायोपेतेभ्यश्च वर्तयेत् ॥१॥ प्राङ् वोदङ् वाऽऽसीन आचार्यो दक्षिणत उदङ्मुख इतरः ॥२॥ द्वौ वा ॥३॥ भूयांसस्तु यथावकाशम् ॥४॥ नोऽच्छ्रितासनोपविष्टो गुरुसमीपे ॥५॥ नैकासनस्थः ॥६॥ न प्रसारितपादः ॥७॥ न बाहुभ्यां जानूपसंगृह्य ॥८॥ नोपाश्रितशरीरः ॥९॥ नोपस्थकृतपादः ॥१०॥ न पाद कुठारिकां कृत्वा ॥११॥ "अधीहि[3] भो३[4] इति" उक्त्वाऽऽचार्य ॐकारं प्रचोदयेत् ॥१२॥ ॐइतीतरः प्रतिपद्यते ॥१३॥ ततसन्ततमधीयीत ॥१४॥ अधीत्योपसंगृह्य ॥१५॥ "विरताः[5] स्म भो३ इति" उक्त्वा यथार्थम् ॥१६॥ "विसृष्टं[6] विरामस्तावदिति" एके॥१७॥ नाऽधीयतामन्तरा गच्छेत् ॥१८॥ नाऽऽत्मानं विपरिहरेदधीयानः ॥१९॥ यदि चेद्दोषः स्यात्त्रिरात्रमुपोष्याऽहोरात्रं वा सावित्रीमभ्यावर्तयेद्यावच्छक्नुयाद् ब्राह्मणेभ्यः किञ्चिद्दद्यादहोरात्रमुमरण्य प्राध्ययनम् ॥२०॥

इत्यष्टमः खण्डः ।

---

१. सूत्रद्वयमिदं मन्त्रानी OEN. OGN. विद्युदादौ वेङ्कु. एम नास्ति च ।   2, तु. मनु. ४, ११७; यम ११, १६   3. हिमो भवति नास्ति वेङ्कु. OEN. ६. ४. स्वरयन्तीयं श्रुतिः ।

## ॥ अथ तर्पणम् ॥

स्नातः[1] ॥१॥ उपस्पर्शनकालेऽवगाह्य देवतास्तर्पयति ॥२॥ "अग्निस्तृप्यतु,[2] वायुस्तृप्यतु, सूर्यस्तृप्यतु, विष्णुस्तृप्यतु, प्रजापतिस्तृप्यतु, विरूपाक्षस्तृप्यतु, सहस्राक्षस्तृप्यतु सोमः, ब्रह्मा, वेदाः, देवाः, ऋषयः, सर्वाणि च छन्दांसि, ॐकारः, वषट्कारः, महाव्याहृतयः, सावित्री, यज्ञाः, द्यावापृथिवी, नक्षत्राणि, अन्तरिक्षम्, अहोरात्राणि, संख्याः, संध्याः, समुद्राः, नद्यः, गिरयः, क्षेत्रौषधिवनस्पतिगन्धर्वाप्सरसः, नागाः, वयांसि, सिद्धाः, साध्याः, विप्राः, यक्षाः, रक्षांसि, भूतान्येवमन्तानि तृप्यन्तु, श्रुतिं[3] तर्पयामि, स्मृतिं तर्पयामि, धृतिं तर्पयामि, रतिं[4] तर्पयामि, गतिं तर्पयामि, मतिं तर्पयामि,[4] श्रद्धामेधे, धारणां च, गोब्राह्मणं, स्थावरजङ्गमानि, सर्वभूतानि तृप्यन्त्विति" यज्ञोपवीती[5] ॥३॥

इति नवमः खण्डः

अथ प्राचीनावीती[6] ॥१॥ पित्र्यां दिशमीक्षमाणः ॥२॥ शतर्चिनः, माध्यमाः, गृत्समदः,[7] विश्वामित्रः, जमदग्निः, वामदेवः, अत्रिः, भारद्वाजः, वसिष्ठः, प्रगाथाः, पावमानाः, क्षुद्रसूक्तमहासूक्ताः सुमन्तुः, जैमिनि-वैशम्पायन-पैल-सूत्र-भाष्य गार्ग्य-बभ्रु-बाभ्रव्य-मण्डु-माण्डव्याः, गार्गी[8] वाचक्नवी, वडवा प्रातिथेयी, सुलभा मैत्रेयी, कहोलं कौषीतकिं, महाकौषीतकिं, सुयज्ञं शाङ्खायनम्, आश्वलायनम्, ऐतरेयम्, महैतरेयम्, भारद्वाजम्, जातूकर्ण्यम्, पैङ्ग्यम्, महापैङ्ग्यम्, बाष्कलम्, गार्ग्यम्, शाकल्यम्, माण्डूकेयम्, महादमत्रम्, औदवाहिम्, महौदवाहिम्, सौयामिम्, शौनकिम्, शाकपूणिम्, गौतमिम्, ये चाऽन्ये आचार्यास्ते सर्वे तृप्यन्त्विति ॥३॥ प्रतिपुरुषं पितरः ॥४॥ पितृवंशस्तृप्यतु ॥५॥ मातृवंशस्तृप्यतु ॥६॥

इति दशमः खण्डः ।

---

1. समग्रम् यार्थं परिशिष्टत्वेन मन्वान OEN. द्र. 2. तु. OGN. 3. तु. OEN. OGN. 4. BMS. पाठो नास्ति 5. BMS. यज्ञोपवीति 6. OMS. प्राचीनावीती 7. BMS. गृत्समदः 8. PMS. गार्गी ।

## ॥ अथ स्नातकधर्माः ॥

न नग्नां[1] स्त्रियमीक्षेताऽन्यत्र मैथुनाद् ॥१॥ नाऽऽदित्यं संधिवेलयोः ॥२॥ अनाप्तम् ॥३॥ अकार्यकारिणम् ॥४॥ प्रेतस्पर्शिनम्[2] ॥५॥ सूतिकोदक्याभ्यां न संवदेत् ॥६॥ एतैश्च ॥७॥ उद्धृततेजांसि न भुञ्जीत ॥८॥ न यातयामैः कार्यं कुर्यात् ॥९॥ न सह भुञ्जीत ॥१०॥ न शेषम् ॥११॥ पितृदेवतातिथिभृत्यानां शेषं भुञ्जीत ॥१२॥ उञ्छशिलमयाचितप्रतिग्रहः साधुभ्यो याचितो वा याजनं वृत्तिः ॥१३॥ पूर्वं-पूर्वं गरीयः ॥१४॥ असंसिध्यमानायां[3] वैश्यवृत्तिर्वा ॥१५॥ अप्रमत्तः पितृदैवतकार्येषु ॥१६॥ ऋतौ स्वदारगामी ॥१७॥ न दिवा शयीत ॥१८॥ न पूर्वापररात्रौ ॥१९॥ न भूमावनन्तर्हितायामासीत ॥२०॥ नित्योदकी ॥२१॥ यज्ञोपवीती[4] ॥२२॥ न विरहयेदाचार्यम् ॥२३॥ अन्यत्र नियोगात् ॥२४॥ अनुज्ञातो वा ॥२५॥

इति एकादशः खण्डः ।

अहरहराचार्यायाऽ[5]ऽभिवादयेत्[6] ॥१॥ गुरुभ्यश्च ॥२॥ समेत्य[7] श्रोत्रियस्य ॥३॥ प्रोष्य प्रत्येत्याऽश्रोत्रियस्य ॥४॥ "असावहं भोः[8]" इत्यात्मनो नामाऽऽदिश्य व्यत्यस्य पाणी ॥५॥ 'असौ' इत्यस्य पाणी संगृह्याऽऽशिषमाशास्ते ॥६॥ नाऽवृतो यज्ञं गच्छेत् ॥७॥ अधर्माच्च जुगुप्सेत ॥८॥ न जनसमवायं गच्छेत् ॥९॥ नोपर्युद्दिशेत्समेत्य ॥१०॥ अनाक्रोशकोऽपिशुनः कुलंकुलो नेतिहेतिः स्यात् ॥११॥ नैकश्चरेत् ॥१२॥ न नग्नः ॥१३॥ नाऽपिहितपाणिः ॥१४॥ देवायतनानि प्रदक्षिणम् ॥१५॥ न धावेत् ॥१६॥ न निष्ठीवेत् ॥१७॥ न कण्डूयेत् ॥१८॥ मूत्रपुरीषे नाऽवेक्षेत ॥१९॥ अवगुण्ठ्याऽऽसीत ॥२०॥ नाऽन्तर्हितायाम् ॥२१॥ यद्येकवस्त्रो यज्ञोपवीतं

1. आगृ ३, ९, ६-८; पागृ २, ७, ८; गोगृ ३, ५; मनु ४, १ 2. PMS स्पर्शनम्०
3. Bühler गौत १०, ५ 4. BMS. यज्ञोपवीति 5. PMS. ०वदनि० 6. BMS. ०रहेत्
7. समवेत्य 8. नु. OGN.

कर्णे धृत्वा[1]॥२२॥ नाऽऽदित्यमभिमुखः॥२३॥ न जघनेन॥२४॥ अहरुदङ्मुखो नक्तं दक्षिणामुखः॥२५॥ न चाऽप्सु श्लेष्म न च समीपे॥२६॥ न वृक्षमारोहेत्॥२७॥ न कूपमवेक्षेत॥२८॥ न धुवनं गच्छेत्॥२९॥ नत्वेव तु श्मशानम्॥३०॥ सशस्त्रोऽहरहराप्लवेत्[2]॥३१॥ आप्लुत्याऽभ्युदकोऽन्यद्वस्त्रमाच्छादयेत्॥३२॥

इति द्वादशः खण्डः।

## ॥ अथ कृषिकर्म ॥

रोहिण्यां कृषिकर्माणि[3] कारयेत्॥१॥ पुरस्तात्कर्मणां प्राच्यां क्षेत्रमर्यादायां द्यावापृथिवीबलिं हरेत्॥२॥ द्यावापृथिवीयमर्चा "नमो[4] द्यावापृथिवीभ्यामिति" चोपस्थानम्॥३॥ प्रथमप्रयोगे[5] सीरस्य ब्राह्मणः सीरं स्पृशेत् "शुनं[6] नः फाला इति" एतामनुब्रुवन्॥४॥ "क्षेत्रस्य[7] पतिनेति" प्रदक्षिणं प्रत्यृचं प्रतिदिशमुपस्थानम्॥५॥

इति त्रयोदशः खण्डः।

## ॥ अथ प्लवकर्म ॥

उदकं तरिष्यन् स्वस्त्ययनं करोति॥१॥ उदकाञ्जलींस्त्रीनप्सु जुहोति। "समुद्राय[8] वैणवे नमः, वरुणाय[9] धर्मपतये नमः, नमः सर्वाभ्यो नदीभ्यः[10]॥२॥ सर्वासां[9] पित्रे विश्वकर्मणे दत्तं हविर्जुषतामिति" जपित्वा॥३॥

---

1. OMS. PMS. कृत्वा 2. OMS. भाप्लुर्वीन भाप्लवेत 3. भागृ २, १०, ३; पागृ २, १३; गोगृ ४, ४ 4. मामं ५. ७; शाबा ३, ४, ३, २१; तु. नमो दिवे नमः पृथिव्यै शौमं ६, २०, ७ 5. OMS. प्रथमप्रयोगे 6. ऋमं ४, ५७, ८ 7. ऋमं ४, ५७ 8. तु. सिन्धुना पतये नमः। मागृ १, १३, १५ 9. स्वगाथाया श्रुतिः। 10. तु नमो नदीनां सर्वासां पतये। मागृ निर्दि. १४.

प्रतीपं स्रवन्तीभ्य उन्नीयं स्थावराभ्यः ॥४॥ तरँश्चेद्भयं शङ्के द्वाशिष्टं सूक्तं जपेत् "समुद्रज्येष्ठा इति" एतत्स्रवम् ॥५॥

इति चतुर्दशः खण्डः ।

## ॥ अथ श्रवणाकर्म ॥

श्रवणं श्रविष्ठीयायां[2] पौर्णमास्यामक्षतसक्तूनां स्थालीपाकस्य वा जुहोति ॥१॥ "विष्णवे[3] स्वाहा, श्रवणाय स्वाहा, श्रावण्यै पौर्णमास्यै स्वाहा, वर्षाभ्यः स्वाहेति" ॥२॥ गृह्यमग्निं बाह्यत उपसमाधाय लाजानक्षतसक्तूँश्च सर्पिषा सन्निनीय जुहोति ॥३॥ "दिव्यानां[4] सर्पाणामधिपतये स्वाहा, दिव्येभ्यः सर्पेभ्यः स्वाहेति" ॥४॥ उत्तरेणाऽग्निं[5] प्रागग्रेषु नवेषु कुशेषूदकुम्भं नवं प्रतिष्ठाप्य ॥५॥ "दिव्यानां[4] सर्पाणामधिपतिरव नेनिक्ष्व दिव्याः सर्पा अव नेनिजतामिति" अपो निनयति ॥६॥ "दिव्यानां[4] सर्पाणामधिपतिः प्र लिखताम्, दिव्याः सर्पाः प्र लिखन्तामिति" फणेन चेष्टयति[7] ॥७॥ "दिव्यानां[4] सर्पाणामधिपतिः प्र लिम्पताम्, दिव्याः सर्पाः प्र लिम्पन्तामिति" वर्णकस्य मात्रा निनयति ॥८॥ "दिव्यानां[4] सर्पाणामधिपतिरा बध्नीताम्, दिव्याः सर्पा आ बध्नन्तामिति" सुमनस उपहरति ॥९॥ "दिव्यानां[4] सर्पाणामधिपतिरा च्छादयताम्, दिव्याः सर्पा आ च्छादयन्तामिति" सूत्रतन्तुमुपहरति ॥१०॥ दिव्यानां[4] सर्पाणामधिपतिराऽङ्क्ताम्, दिव्याः सर्पा आऽञ्जतामिति" कुशतरुणेनोपघातमाञ्जनस्य[8] करोति ॥११॥ दिव्यानां[4] सर्पाणामधिपतिरीक्षताम्, दिव्याः सर्पा ईक्षन्तामिति" आदर्शेनेक्षयति ॥१२॥ दिव्यानां[4] सर्पाणामधिपत एष ते बलिः, दिव्याः सर्पा एष वो बलिरिति" बलिमुपहरति ॥१३॥ एवम् "आन्तरिक्षाणाम्[4]॥१४॥ दिश्यानाम्[4]॥१५॥ पार्थिवानामिति"[9]॥१६॥ त्रिस्त्रिरहर्चं[6]-

1. कर्म ७, ४१, १ 2. माग् २, १; पाग् २, १४; गोग् ३, ७; भाग् २, १; माग् २, १६; 3. तैसं ७, ३, १५, १; मैसं ३, १२, ५; याजुषी श्रुतिः। 4. स्वरार्न्विता श्रुतिः। 5. OMS. उत्तरेणाग्निम् 6. PMS. OMS कुशेषूदकुंभं नवम् 7. OMS चेष्टयति 8. B.M.S कुशतरुणे दपनमा० 9. तु. OGN.

स्तरामुच्चैस्तरां पूर्वम् ॥१७॥ नीचैस्तरान्नीचैस्तरामुत्तरम्[1]॥१८॥ एवमहरहर-स्ततसक्तूनां दर्व्योपघातमा प्रत्यवरोहणाद्रात्रौ वाग्यतः सोदकं बलिं हरेत् ॥१९॥ वाग्यता चैनमुपसादयेत् ॥२०॥ य उपक्रमः स उत्सर्गः[2] ॥२१॥ "सुत्रामाणमिति"[3] शय्यामारोहेत् ॥२२॥

इति पञ्चदशः खण्डः ।

## ॥ अथ आश्वयुजीकर्म ॥

आश्वयुज्यां[4] पौर्णमास्यामैन्द्रः पायसः ॥१॥ "अश्विभ्यां[5] स्वाहा, अश्वयुग्भ्यां[6] स्वाहा, आश्वयुज्यै[7] पौर्णमास्यै स्वाहा, शरदे[7] स्वाहा, पशुपतये[8] स्वाहा, पिङ्गलाय[9] स्वाहेति" आज्यस्य हुत्वा ॥२॥ अथ पृषातकस्य "आ[10] गावो अग्मन्निति" एतेन सूक्तेन प्रत्यृचं जुहुयात् ॥३॥ मातृभिर्वत्सां संसृजन्ति तां रात्रीम् ॥४॥ अथ ब्राह्मणभोजनम् ॥५॥

इति षोडशः खण्डः ।

## ॥ अथ आग्रहायणीकर्म ॥

आग्रहायण्यां[10] प्रत्यवरोहेत् ॥१॥ रोहिण्यां प्रोष्ठपदासु वा ॥२॥ प्रातः शमीपलाशमधूकपीकापामार्गाणां शिरीषोदुम्बरकुशतरुणबदरीणां च पूर्णमुष्टिमादाय सीतालोष्टं च ॥३॥ उदपात्रे ऽवधाय[11]॥४॥ महाव्याहृतीः

1. तु. OGN. 2. OMS. उत्सर्गः 3. ऋग् १०, ६३ १० 4. आगृ २, २; पागृ २, १६; गोगृ ३, ८ 5. ऐब्रा ७, ६, २; तैब्रा ३, १, ५, १३ 6. तैब्रा निर्दि. स्थ. 7. स्वगार्ग्यस्या श्रुतिः। 8. मद्‌बुब्रा १।१; 9. ऋग ६, २८ 10. आगृ २, ३; पागृ ३, २; गागृ ३, ६ 11 OMS. अवनय

सावित्रीं चोद्धृत्य[1] "अप[2] नः शोशुचदघमिति" एतेन सूक्तेन तस्मिन्निमज्ज्य-निमज्ज्य प्रदक्षिणं शरण्येभ्यः पाप्मानमपहृत्य उत्तरतो निनयेत्॥५॥ मधुपर्को दक्षिणा ॥६॥

इति सप्तदशः खण्डः ।

## ॥ अथ सर्पबलिकर्म ॥

"ग्रीष्मो[2] हेमन्त उत वा[3] वसन्तः शरद् वर्षाः सुकृतन्नो[4] अस्तु ।
तेषामृतूनां[5] शतशारदानां निवात एषामभये स्याम[6] स्वाहा ॥
अप[7] श्वेत पदा जहि पूर्वेण[8] चाऽपरेण च ।
सप्त च वारुणीरिमाः[9] सर्वाश्च राजबान्धवैः[10] स्वाहा ॥"

"श्वेताय[11] वैदार्वाय[12] स्वाहा, विदर्वाय स्वाहा,तक्षकाय वैशालेयाय स्वाहा, विशालाय स्वाहेति" आज्यस्य हुत्वा ॥१॥ "सुहेमन्तः सुवसन्तः सुग्रीष्मः प्रति धीयताम्, सुवर्षाः[13] सन्तु नो वर्षा., शरदः[14] शम्भवन्तु न इति" ॥२॥ "शन्नो[15] मित्र इति" पलाशशाखया विमृज्य ॥३॥ "समुद्रादूर्मिरिति"[16] अभ्युक्ष्य॥४॥ "स्योना[17] पृथिवी भवेति" स्रस्तरमास्तीर्य ॥५॥ ज्येष्ठदक्षिणाः पार्श्वैः संविशन्ति ॥६॥ "प्रति ब्रह्मन्[18] प्रति तिष्ठामि क्षत्र इति" दक्षिणैः॥७॥ "प्रत्यश्वेषु[19] प्रति तिष्ठामि गोष्विति" सव्यैः ॥८॥ "प्रति पशुषु प्रति तिष्ठामि पुष्टाविति"[20] दक्षिणैः॥९॥ "प्रति प्रजायां[21] प्रति तिष्ठाम्यन्न इति" सव्यैः॥१०॥

1. GMS. निमज्ज्य 2. ऋसं १, ९७, 3. ' नो तैसं ४, ७, २, ४; शौसं ६, ५५, २; मानसं २, १, ११; मानृ २, ४, १४ 4. सुविर्त, भिर्ते नो दधन्तु शौसं । नेसं निर्दि. स्थ. 5. पगृ ३, २, २ 6. वसेम पागृ निर्दि. स्थ. 7. मानृ २, ३, ३; पगृ २, १४, ५; 8. शांसं १०, ४, ३ 9. पागृ वरुण्यादि०; मानृ निर्दि. स्थ. । तु. मासं २, १७, ८६; 10. ०बान्धवैः मानृ निर्दि. स्थ 11. तु. मानृ निर्दि. स्थ, मानृ २, ७, १ 12. BMS वैदार्व्याय OMS. वैदार्व्याय वैदाभ्याय 13. तु शिवा नो वर्षाः सन्तु पागृ ३, २, १२ 14. तु. पागृ मानृ. स्थ. 15. ऋसं १, ९०, ९ 16. ऋसं ४, ५८, १ 17. ऋसं १, २२, १५ 18. प्रतिब्रह्म OMS. मैसं ३, ११, ८; तु. पैसा ८, ४, ३ 19. मासं २०, १०; मैसं निर्दि. स्थ. 20. स्वगात्रेण ध्रुतिः 21. मैसं निर्दि. स्थ. । तैसा ३, ७, १०, ३; काठसं १, १४, २; OMS. अन्नम इति ।

उद्दीर्ष्व[1] जीव इति" उत्थानम् ॥११॥ स्रस्तरे तां रात्रीं शेरते ॥१२॥ यथा-सुखमत ऊर्ध्वम् ॥१३॥

इत्यष्टादशः खण्डः ।

## ॥ अथ चैत्रीकर्म ॥

चैत्र्यां पौर्णमास्याम् ॥१॥ करम्भुपर्णानि[2] मिथुनानां च यथोपपादं पिष्टस्य[3] कृत्वा ॥२॥ ऐन्द्राग्नस्तुण्डिलः[4] ॥३॥ रौद्रा गोलकाः ॥४॥ लोकतो नक्षत्राण्यन्वाकृतयश्च-लोकतो नक्षत्राण्यन्वाकृतयश्च ॥५॥

इत्येकोनविंशः खण्डः ।

इति[5] शाङ्खायनगृह्यसूत्रे चतुर्थोऽध्यायः

---

1. ऋसं १०, १८, ८
2. तु. OGN.
3. BMS. पिष्टस्य
4. तु. काठगृ ७०, ३-५
5. BMS. इति गृह्यसूत्रे । OMS. चतुर्थोऽध्यायः ।

"इदं[1] विष्णुरिति" ॥६॥ "यन्[2] किञ्चेदमिति" मज्जयित्वा ॥७॥ धेनुर्दक्षिणा वस्त्रयुग्मञ्च ॥८॥ अतो ब्राह्मणभोजनम् ॥९॥

इति द्वितीयः खण्डः ।

## ॥ अथ आरामप्रतिष्ठा कर्म ॥

अथाऽऽरामेऽग्निमुपसमाधाय ॥१॥ स्थालीपाकं श्रपयित्वा[4] ॥२॥ "विष्णवे स्वाहा, इन्द्राग्निभ्यां स्वाहा, विश्वकर्म्मणे स्वाहेति, यान् वो नर[5] इति" प्रत्यृचं जुहुयात् ॥३॥ "वनस्पते शतवल्श इति" अभिमन्त्र्य ॥४॥ हिरण्यं दक्षिणा ॥५॥

इति तृतीयः खण्डः ।

## ॥ अथ प्रायश्चित्तयः ॥

यदि पार्वणस्त्वकृतोऽन्यतरस्ततश्चरुः ॥१॥ "अग्नये[6] वैश्वानराय स्वाहा, अग्नये[8] तन्तुमते स्वाहेति" ॥२॥ होमातिक्रमे ॥३॥ सायं "दोषावस्तर्नमः स्वाहा" ॥४॥ प्रातः "प्रातर्वस्तर्नमः[10] स्वाहेति" ॥५॥ यावन्तो होमास्तावतीर्हुत्वा पूर्ववद्धोमः ॥६॥

इति चतुर्थः खण्डः ।

कपोतोलूकाभ्यामुपवेशने ॥१॥ "देवाः[11] कपोत इति" प्रत्यृचं जुहुयात् ॥२॥ दुःस्वप्नदर्शने चाऽरिष्टदर्शने च ॥३॥ निशायां काकशब्द-क्रान्ते च ॥४॥ अन्येषु चाऽद्भुतेषु च ॥५॥ पयसा चरुं श्रपयित्वा ॥६॥

1. ऋसं १, २२, १७ 2. ऋम ७, ८१, ५ 3. OMS. युगम् 4. OMS. ०पाकस्य हुत्वा
5. ऋसं ३, ८, ६ 6. ऋसं ३, ८, ११ 7. माम ११, ६६; तैम ४, ७, ६, १; मैसं २, ७, ७
8. पैमा ७, ६, ६ 9. दोषा वस्तोः स्वाहा कासं ६, ८ 10. मैसं १, ८, ७; काश्री २, १२, ४
11. ऋसं १०, १६५ ।

सरूपवत्साया गोः पयसि ॥७॥ न त्वेव तु कृष्णायाः ॥८॥ रात्रीसूक्तेन[1] प्रत्यृचं जुहुयात् ॥९॥ हुतशेषं महाव्याहृतिभिः प्राश्य ॥१०॥ "भद्रं[2] कर्णेभिरिति" कर्णौ ॥११॥ "शतमिन्नु[3] शरदो अन्ति देवा इति" आत्मानमभिमन्त्र्य ॥१२॥ ब्राह्मणेभ्यः किञ्चिद्दद्यात् ॥१३॥

इति पञ्चमः खण्डः ।

व्याधौ समुत्थिते ॥१॥ "इमा[4] रुद्राय तवसे कपर्दिन इति" प्रत्यृचं गावेधुकं चरुं जुहुयात् ॥२॥

इति षष्ठः खण्डः ।

अकृतसीमन्तोन्नयने चेत् प्रजायेत ॥१॥ अकृतजातकर्माऽऽसीत् ॥२॥ ततोऽतीते दशाह उत्सङ्गे मातुः कुमारकं[5] स्थापयित्वा ॥३॥ महाव्याहृतिभिर्हुत्वा पूर्ववद्धोमः ॥४॥

इति सप्तमः खण्डः ।

स्थूणाविरोहणे ॥१॥ स्थालीपाकं[6] श्रपयित्वा "अया[7] विष्ठा जनयन् कर्वराणि, पिशङ्गरूप[8]: सुभरो वयोधा इति" द्वाभ्यां चरुं जुहुयात् ॥२॥ यदि प्रणीताचरुराज्यस्थाल्यन्यदपि मृन्मयं भिन्नं स्रवेत् ॥३॥ सर्वप्रायश्चित्ताहुतीर्हुत्वा "यं[9] ऋते चिदिति" तृचेन भिन्नमन्त्रयते ॥४॥ यदि[10] असमाप्ते[10] होमे पवित्रे नश्येते ॥५॥ सर्वप्रायश्चित्तं हुत्वा "अप्स्वग्न[11] इति" पुनरुत्पादयेत् ॥६॥

इत्यष्टमः खण्डः ।

---

1. OMS. रात्रिसूक्तेन । तु. ऋसं १०, १२७ 2. ऋसं १, ८९, ८ 3. ऋसं १, ८९, ९ 4. ऋसं १, ११४ 5. OMS. कुमारन् 6. तैसं ४, ७, १२, २; शौसं ७, २, १; शांश्रौ २, १०, १, मश्रौ २, ११, १२ 7. शांश्रौ ३, १०, १; शौसं ७, ३, १ 8. ऋसं २, ३, ९; तैसं ४, १, ११, २ 9. ऋसं ८, १, १२ 10. OMS. यदृ मनसे 11. ऋसं ८, ४३, ९

## ॥ अथ सपिण्डीकरणम् ॥

अथ सपिण्डीकरणम् ॥१॥ चत्वार्युदपात्राणि पूरयित्वा पितुः प्रभृति ॥२॥ तद्वत् पिण्डान् कल्पयित्वा ॥३॥

"ये समानाः समनसः पितरो[1] यमराज्ये ।
तेषां[2] लोकः स्वधा नमो यज्ञो[2] देवेषु कल्पताम् ॥
ये समानाः[2] समनसो जीवा जीवेषु मामकाः ।
तेषां श्रीर्मयि कल्पतामस्मिँल्लोके शतं समाः ॥"

"समानो[3] मन्त्र इति" द्वाभ्यामाद्यं पिण्डं त्रिषु विभजेत् ॥४॥ तथैवाऽर्घपात्राणि ॥५॥ एवं मातुर्भ्रातुर्भार्यायाः पूर्वमारिण्या एभिः पिण्डैः प्रक्षिप्य ॥६॥

इति नवमः खण्डः ।

## ॥ अथ प्रायश्चित्तयः ॥

यदि गृहे मधूका मधु कुर्वन्ति ॥१॥ उपोष्यौदुम्बरीः समिधोऽष्टशतं दधिमधुघृताक्ता "मा[4] नस्तोक इति" द्वाभ्यां जुहुयात् ॥२॥ "शन्न[5] इन्द्राग्नी इति" च सूक्तं जपेत् सर्वेषु च कर्मसु प्रतिश्रुतादिषु ॥३॥ प्रादेशमात्रीः पालाशीः समिधः सप्तदश हुत्वा पश्चात्स्त्वग्रहणम् ॥४॥ दर्शपूर्णमासयोः पञ्चदश ॥५॥ मध्यावर्षेऽष्टके तिस्रो या भवन्ति, पितृयज्ञवद्धोमः ॥६॥

इति दशमः खण्डः ।

यदि गृहे वल्मीकसम्भूतिर्गृहोत्सर्गः ॥१॥ अथ[6] त्रिरात्रमुपोष्य महाशान्तिं कुर्यात्, महाशान्तिं कुर्यात् ॥२॥

इत्येकादशः खण्डः ।

### इति[7] शाङ्खायनगृह्यसूत्रे[8] पञ्चमोऽध्यायः

1. मास १६, ४५; मैसं ३, ११, १० 2. काठसं ३८, २; शबा १२, ८, १, १६; तैब्रा २, ६, ३, ४; आपश्री १, ६, १२; गोगृ ५, ६, ४ 3. ऋसं १०, १६१, ३-४ 4. ऋसं १, ११४, ८-६ 5. ऋसं ७, ३५ 6. नु. OGN. 7. BMS. इति गृह्यसूत्रे । LMS. इति गृह्यारण्यके पञ्चमोऽध्यायः 8. OMS पञ्चमोऽध्यायः

## ॥ स्वाध्यायारण्यकनियमाः ॥

अथाऽतो ब्रह्माणं ब्रह्मऋषिं ब्रह्मयोनिमिन्द्रं प्रजापतिं वशिष्ठं वामदेवं कहोलं कौषीतकिं महाकौषीतकिं, सुयज्ञं शाङ्खायनम्, आश्वलायनमैतरेयं महैतरेयं कात्यायनं शाट्यायनं शाकल्यं बभ्रुं बाभ्रव्यं मण्डुं माण्डव्यं सर्वानेव पूर्वाचार्यान्नमस्य स्वाध्यायारण्यकस्य नियमानुदाहरिष्यामः ॥१॥ अहोरात्रं ब्रह्मचर्य्यमुपेत्याऽऽचार्योऽमांसाशी ॥२॥ आमपिशितं[1] चण्डालं सूतिकां रजस्वलां तेदन्यपहस्तकदर्शनान्यनध्यायकानि ॥३॥ शवरूपाणां[1] च ॥४॥ यान्यास्ये[1] न प्रविशेयुः ॥५॥ वान्तकृतश्मश्रुकर्म ॥६॥ मांसाशनश्राद्धसूतक-भोजनेषु ॥७॥ ग्रामाऽध्ययनानन्तर्हितान्यहानि ॥८॥ त्रिरात्रोऽनचक्लृप्तः ॥९॥ पराभिमृष्टः[2] ॥१०॥ उपपर्वणामन्ह उत्तरार्धानि च ॥११॥ अग्नि-विद्युत्स्तनयित्नुवर्षामहाभ्रप्रादुर्भावाच्च ॥१२॥ वाते च शर्कराकर्षिणि यावत्कालम् ॥१३॥

इति प्रथमः खण्डः ।

ऊर्ध्वमाषाढ्याश्चतुरो[3] मासान्नाऽधीयीत ॥१॥ अत्यन्तं[3] शक्यं इति नियमाः ॥२॥ प्राग्ज्योतिषमपराजितायां दिशि पुण्यमुपगम्य देशम् ॥३॥ अनुदित उदकग्रहणम् ॥४॥ मण्डलप्रवेशश्च "आञ्जनगन्धिमिति"[4] एतयर्चा ॥५॥ मण्डलं तु प्राग्द्वारमुदग्द्वारं वा जनाग्रीयमसम्प्रमाण-मसंबाधम् ॥६॥ आवामदेव्यमुत्तरशान्तिः ॥७॥ पुनःप्राध्येपणं च ॥८॥ बहिर्मण्डलस्याभिराचम्य ॥९॥ प्राधीयीरन् कृतशान्तयः ॥१०॥ शान्ति-

1. तु. OGN. तु. शांगृ २, १२, ८-१०; ४, ७ 2. OMS. BMS. द्र.निपृ॰ ह 3. प्रथम वरग सूत्रमिति OGN. 4. ऋग्वे १०, १४६, ६ 5. तु. OEN.

पात्रोपघाते प्रोक्षणं प्रायश्चित्तिः ॥११॥ प्रोक्षणं तु हिरण्यवता पाणिना दर्भपिञ्जूलवता वा ॥१२॥ इति भाषिकम्[1] ॥१३॥

इति द्वितीयः खण्डः ।

अथ प्रविश्य मण्डलम् ॥१॥ प्राङ्मुख आचार्य उपविशत्युदङ्मुखा दक्षिणत इतरे यथाप्रधानम् ॥२॥ असम्भवे सर्वतोमुखाः ॥३॥ प्रतीक्षेरन्नुदयमादित्यस्य ॥४॥ विज्ञाय चैनं दीधितिमन्तम् ॥५॥ "अधीहि भो३ इति" दक्षिणैर्दक्षिणं सव्यैः सव्यं दक्षिणोत्तरैः पाणिभिरुपसंगृह्य पादावाचार्यस्य निर्णिक्तौ ॥६॥ अथाऽऽधाय शान्तिपात्रे दूर्वाकाण्डवतीष्वप्स्ववपिन्वमानैः पाणिभिः प्राधीयीरन् ॥७॥ एष विधिर्यदि तु ग्लायेरन्नेक एषामशून्यं शान्तिभाजनं कुर्यात् ॥८॥ अध्यायाद्यन्तयोश्च सर्वे ॥९॥ तत्सन्ततमव्यवच्छिन्नं भवति ॥१०॥

## ॥ अथ शान्तिः ॥

अथ शान्तिः ॥११॥ ॐकारो महाव्याहृतयः सावित्री रथन्तरं बृहद्वामदेव्यं, पुनरादायं ककुप्कारमिति बृहद्रथन्तरे ॥१२॥ दशैताः सम्पादिता भवन्ति ॥१३॥ "दशदशिनी[2] विराडिति" एतद् ब्राह्मणम् ॥१४॥

इति तृतीयः खण्डः ।

"अदब्धं[3] मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे[4] मा मा हिंसीरिति" सवितारमीक्षन्ते ॥१॥ "युवं[5] सुराममिति" एका "स्वस्ति[6] नः पथ्यास्विति" च

---

1. PMS. भाषिनम् 2. कौषा २, ३ 3. तु. OGN. OEN माश्रौ २, १, २, ३६ च
4. तैसं ३, १, १, २; माश्रौ निर्दि. स्थ. 5. ऋसं १०, १३१, ४ 6. ऋसं १०, ६३ १५-१७

तिस्र इति महाव्रतस्य[1] ॥२॥ शक्करीणां तु पूर्वम् ॥३॥ "प्रत्यस्मै[2] पिपीषते, योरयिवो[3] रयिन्तमः, त्यमु[4] वो अप्रहणमिति" त्रयस्तृचाः "अस्मा[5]-अस्मा इदन्धस इति, एवा[6] ह्यसि वीरयुरिति" अभितः शक्करीणाम् ॥४॥ अथोपनिषदाम् ॥५॥ यथैवं महाव्रतस्य ॥६॥ संहितानां तु पूर्वम् "ऋतं[7] वदिष्यामि सत्यं वदिष्यामीति" विशेषः ॥७॥ अथ मन्थस्य "तत्सवितुर्वृणीमहे[8], तत्सवितुर्वरेण्यमिति[9]" पूर्वं च ॥८॥ "अदब्धं मन इति" आधिकारिकाः शान्तयस्ततः ॥९॥ इत्याह्निकम् ॥१०॥ अथोत्थानकालेऽपकृष्य[10] पापम् ॥११॥ नित्यां शान्तिं कृत्वा ॥१२॥ "उदितः शुक्रियं दध इति" आदित्यमीक्षन्ते ॥१३॥

इति चतुर्थः खण्डः ।

"तमहमात्मनी[11]" त्यात्मानमभिनिहितं[12] त्रिर्हितम् ॥१॥

"उप[13] मा श्रीर्जुपतामुप यशोऽनु मा श्रीर्जुपतामनु यशः ॥२॥

सेन्द्रः सगणः सबलः सयशाः सवीर्य उत्तिष्ठानीत्युत्तिष्ठति ॥३॥

"श्रीर्म उत्तिष्ठतु यशो मा उत्तिष्ठत्विति" उत्थाय ॥४॥ "इदमहं[14] द्विषन्तं भ्रातृव्यं पाप्मानमलक्ष्मीं चाऽप धुनोमीति" वस्त्रान्तमवधूय ॥५॥ "अप[15] प्राच इति" सूक्तम् "इन्द्रश्च[16] मृळयाति न इति" द्वे "यत[17] इन्द्र भयामहे इति" एका "शास[18] इत्था महाँ असीति" प्राचीम् "स्वस्तिदा[19] इति" दक्षिणां दक्षिणावृतः "वि[18] रक्ष इति" प्रतीचीम् "वि[18] न इन्द्रेति" उदीचीं सव्यावृतः "अपेन्द्रेति[20]" दक्षिणावृतो दिवमुदीक्षन्ते ॥६॥

इति पञ्चमः खण्डः ।

1. BMS. च तस्य 2. ऋसं ६, ४२, १-३ 3. ऋसं ६, ४४, १—३; कौब्रा २३, २; सांश्रौ १०, ६, १४; १८, १८, ११; तु. विरा ५, ३८३ 4. ऋसं ६, ४४, ४—६ 5. ऋसं ६, ४२, ४ 6. ऋसं ८, ८१, २८ 7. तैआ ७, १, १ 8. ऋसं ५, ८२, १ 9. ऋसं ३, ६२, १० 10. स्वाध्यायानन्तरं पूर्वोक्तवर्णनं पञ्चमखण्डस्यादिमं सूत्रमिति OMS. 11. स्वात्मसंदापूर्तिः 12. तु. OGN, OEN च 13. ऋसं १०, १३१ 14. ऋसं २, ४१, ११-१२ 15. ऋसं ८, ५०, १२ 16. ऋसं १०, १५२, १ 17. ऋसं १०, १५२, २ 18. ऋसं १०, १५२, ३; शौसं १, २१, ३; कौसं २, १२१७; तैसं १, ६, १२, ५; तैब्रा २, ४, ७, ४; काठसं २०, २०, ७; मासं ६, २, ५ 19 ऋसं १०, १५२, ४ 20. ऋसं १०, १५२, ५

"सविता[1] पश्चात्तात्, तच्चक्षुरिति"[2] आदित्यमुपस्थाय ॥१॥ व्यावर्तमानश्च प्रत्यायन्त्युपविशन्ति ॥२॥ "यथाऽऽपः[3] शान्ता इति" शान्तिपात्रादप आदाय ॥३॥ पृथिव्यामवनिनीय ॥४॥ "यथा[3] पृथिवीति" अस्याऽभिकर्षन्ति ॥५॥ "एवं[3] मयि शाम्यत्वि" ति दक्षिणेंऽशे निलिम्पति ॥६॥ एवं द्वितीयम् ॥७॥ एवं तृतीयम् ॥८॥ "काण्डात्–काण्डात्सम्भवसि"[3] "काण्डात्-काण्डात्प्र[4] रोहसि" "शिवा[3] नः शाले भवेति" दूर्वाकाण्डमादाय मूर्धनि कृत्वा ॥९॥ "अग्निस्तृप्यतु"[3]। "वायुस्तृप्यतु।" "सूर्यस्तृप्यतु।" "विष्णुस्तृप्यतु।" "प्रजापतिस्तृप्यतु।" "विरूपाक्षस्तृप्यतु।" "सहस्राक्षस्तृप्यतु।" "सर्वभूतानि तृप्यन्त्वि" ति ॥१०॥ सुमन्तु-जैमिनि-वैशम्पायन-पैलाद्याचार्याः ॥११॥ पितॄन्प्रत्यात्मिकान् ॥१२॥ "समुद्र[5] व इति" अपो निनीय ॥१३॥ वामदेव्यं जपित्वा ॥१४॥ यथाकामं विप्रतिष्ठन्ते ॥१५॥

यथाऽऽगमप्रज्ञाश्रुतिस्मृतिविभवादनुक्रान्तमानाद्
अविषादप्रतिष्ठादभयं शं भवे नो अस्तु

नमोऽस्तु देवर्षिपितृमनुष्येभ्यः शिवमायुर्वपुरनामयं शान्तिमरिष्टिमक्षितिमोजस्तेजो यशो बलं ब्रह्मवर्चसं कीर्तिमायुः प्रजां पशून्नमो नमस्कृता वर्धयन्तु ॥ दुष्टुताद् दुरुपयुक्तान्न्यूनाधिकाच्च सर्वस्मात्स्वस्ति देवर्षिभ्यश्च ब्रह्म सत्यं च पातु मामिति-ब्रह्म सत्यं च पातु मामिति ॥१६॥

इति षष्ठः खण्डः।

इति शाङ्खायनगृह्ये[6] षष्ठोऽध्यायः। समाप्तञ्चेदं शाङ्खायनगृह्यसूत्रम् ॥

---

1. ऋसं १०, ३६, १४ 2. ऋसं ७, ६६, १६, 3. स्वशाखीया श्रुतिः 4. प्ररोहन्ती इति विशिष्टः पाठभेदः। मासं १३, २०; तैसं ४, २, ९, २; ५, २, ८, ३; मैसं २, ७, १५; काठसं १६, १६; शब्रा ७, ४, २, १४; मानश्रौ ६, २४, ६; काश्रौ १७, ४, १८ 5. आपमं २, ६, १४; तु. शांश्रौ ४, ११, १२
6. BMS. शाङ्खायनशाखायाः कौषीतकिगृह्यसूत्रे षष्ठोऽध्यायः समाप्तः। समाप्तोऽयं ग्रन्थः। इत्येव कौशिकसूत्रम् ॥ LMS. इति गृह्यसंग्रहके षष्ठोऽध्यायः।

१, १, २ नाभा.

यत्र यस्मिन्नग्नौ अन्त्येमन्त्रां अन्त्यां तां समिधमादध्यादिति अनेनाऽग्निमग्निकार्यं लक्ष्यते, तमग्निमिन्धीत धारयेदित्यर्थः । एतद् यदि पित्रा भ्रात्राऽन्येन वा कन्याया वाग्दानं कृतं भवति तदैवैतद् आधानम्, अन्यथा ब्रह्मचारिण आधानं न भवति । तथा च कारिका—

पित्रा दत्ताऽथवा भ्रात्रा वाचा चाऽन्येन यस्य तु ।
कन्या भवेत्समावर्त्स्यंस्तादधीत स नेतर इति ।।

कर्मप्रदीपेऽप्युक्तम् (१, ६, १३):—

यस्य दत्ता भवेत्कन्या वाचा सत्येन केनचित् ।
सोऽन्त्यां समिधमाधास्यन्नादधीतैव नाऽन्यथेति ।।
कन्दत्ता यद्यनूढैव कन्या पञ्चत्वमापतेत् ।
न त्यजेदग्निकार्याग्नि क्षिप्रमन्यां समुद्वहेत् ।।
यद्यसौ न लभेत् कन्यामन्यां स्यादुत्तराश्रमी ।
एहि मे प्राणमारोहेत्यात्मन्यग्निं निवेशयेत् ।। इति कारिका ।।

१, १, ५

पूर्वोक्तकाले यद्यग्निर्नाऽऽहितस्तदा गृहपती "पितरि सकृताधानेऽपि ज्येष्ठे भ्रातरि वा प्रेते मृते सति सपिण्डपित्राऽनुजैरविभक्तोऽपि ज्यायान् ज्येष्ठ पुत्रः स्वयमृत्विग्निरपेक्षोऽग्निमादधीत वा शरदः पक्षान्तरैः सह विकल्पार्थः । अत्र स्वयंग्रहणात् सर्वे पाकयज्ञाः स्वयं कर्तव्याः प्रथमप्रयोगे ऋत्विग्निरपेक्ष एव । मद्रा प्रेते वा गृहपतौ स्वयं ज्यायानिति सूत्रद्वयम्, ब्राह्मणक्षत्रियविशां ज्यायान् ज्येष्ठो ब्राह्मणः स्वयं पाकयज्ञान् करोति, इतरयोर्वर्णयोः पुरोहितद्वारा पाकयज्ञाः कर्तव्या इति, एतादर्थमिदं स्वयंग्रहणम् । 'ज्यायान् विप्रः स्वयं कुर्यात् क्षत्रियादेः पुरोहितः इति कारिका । तदाऽभ्युदयिकपूर्वकमुक्त योनितोऽग्निमानीय चतुरस्रे संस्थाप्य शतब्राह्मणभोजनपूर्वकं कर्म समापयेत् । सायंवैश्वदेवहोमयोः पूर्ववज्ज्ञेयम् शान्ताग्नौ पुनराधाननिमित्ते च पूर्ववद्भवति प्रेते वा गृहपतौ परमेष्ठिकरणमिति छन्दोगगृह्ये ।

१, १, ८

पुरवो बहवः पशवो यथोक्तौ ब्राह्मणक्षत्रियौ तथा विट्कुलमपि । केचित् पुरवानुविद्धनिमित्ताऽधिकरणं विशेषणं वदन्ति, तद् युक्तं न मन्ये । तन्त्रान्तरेऽपि श्रूयते 'ब्राह्मणक्षत्रियवैश्येभ्यो धनवद्भ्यपशवाग्निराहरणीय इति तथा छन्दोगगृह्ये "अपि वा बहुयाजिन एवागाराद् ब्राह्मणस्य वा राजन्यस्य वा वैश्यस्य वा" इति । तस्माद्भिन्नाधिकरणमेव युक्तम् । कारिकामते तु भिन्नमेव । ब्राह्मणक्षत्रियवैश्येभ्यो वित्तवद्भ्योऽग्निमाहरेदिति ।

१, १, ६

एके आचार्याः सायन्तने होमकाले प्रातस्तने च होमकाले स्वयोनितोऽग्निराहरणं वदन्ति··· तत्र मातृयागपूर्वकमाधाननिमित्तमाभ्युदयिकं विधाय स्वयोनितोऽग्निमानीय चतुरस्रे स्थाप्य तण्डुलादीनां वैश्वदेवार्थं पाकं विधाय वैश्वदेवहोमयोरर्थं एकमेव आभ्युदयिकं विधाय वैश्वदेवं निर्वर्त्याग्निमुत्सृजेत् । एवं सायं स्वयोनित आनीय स्थण्डिले स्थाप्य सायन्तनं होमं हुत्वा वैश्वदेवं च कृत्वाऽग्नेरुत्सर्जनं कुर्यात् । एवं प्रातरपि···। एवं दर्शपौर्णमासे देवानां यजनं प्रतादानं पिण्डपितृयज्ञोऽप्येवमेव ।

१, १, १०

केचन आचार्या आहृतस्याग्नेः सायङ्काले आहुतिभि. संस्कार अध्वर्युप्रत्ययः अध्वर्युतः प्रत्यय. प्रत्येतव्य इति वदन्ति । इदमाधानं द्व्यह-साध्यम् : अन्यद् आधानं सद्यस्करम् । सच संस्कारप्रकार विधिः अध्वर्यु कल्पनो विवादः क्रियते । पूर्वमध्वर्यु वरणमागारकरणं क्षौमधारणं पुष्पभादियोनितो अग्ने राहरणम् । तस्मिन्नह्न्यनशनमुपास्तजपो न भवति ।

१, १, १२

तस्योपासनीयस्याग्नेः (तु. द्राह्यौ २. ६. २) प्रादुष्करणकालः अवाशनकालः ।

१, २, ४

एकत्र श्रुतगुणा एव भवन्ति । एकत्र वाग्रूपगुणा भवन्ति । तत्र सर्वान् गुणान् परित्यज्य श्रुतवानेवादरणीय' । यत' श्रुतं सर्वमतीत्यानुवर्तते । 'श्रुतवन्तं नापत्रमेदिति' आपस्तम्बः ।

१, ३, ३

पूर्णविपनं पूर्णेन विपनं विशदं प्रसिद्धम् चरम् तु. गाह्यौ. (४, १, ५-७)

१६

प्रागाहुते. पूर्वाहुते' प्राक् पूर्वम् । एके आचार्या. आदेशमात्रा समिधं-समिद्धोगमिच्छन्ति ।

१७.

परिसमुह्य, होष्यमु 'ऋतं त्वा सत्येन परि सिञ्चामीति त्रिस्त्रिरेकैकं पर्युक्ष्य हुत्वा च 'सत्यं त्वर्तेन परि षिञ्चामीति प्रातरिति सूचितं (द्राह्यौ २. ६, ९-११) तथा इहाऽपि द्रष्टव्यं कल्पैकत्वाद् । आधानोत्तरं द्वादशरात्रं स्वयं होमः पर्वणि च । द्वादशरात्र स्वयं होमी स्यात् ।

१, ४, १

प्रातः ब्राह्मे मुहूर्ते उत्थाय शौचाचारादिक्रियां निर्वर्त्य विधिपूर्वकमाचम्य अहरहः प्रतिदिनं स्वाध्यायमधीयीत पठेत्···असंयुज्य विधीयमानत्वाद् ब्राह्मणक्षत्रियविशामिदमध्ययनम् । किमध्ययनमित्यत आह ।

रामप.

अथ शयनादुत्थितस्य अशान्तस्य होमात् प्रागेव प्रबुद्धमात्रस्य प्रातर्जपस्त्रैवर्णिकः । स्वाध्यायं दिने-दिने यथाशक्ति प्रातस्तरां पठेत्, ततः 'अद्या नो देव सवितः' इतिद्वे, 'अपेहि··· स्वस्ति नो मिमीताम् । इति पञ्चेति स्वाध्यायान्तरं सप्तत्रिंशद् ऋचश्चाऽवश्यं पाठ्याः (?)

१, ४, २

चकाराद् आयुष्कराणि 'आ नो भद्रा (१, ८९) इत्यादि जप्यानि। अथवा च शब्दो ब्रह्मयज्ञानुकर्षणार्थः : स च ब्रह्मयज्ञः प्रातराहुतेः पश्चात्तर्पणादर्वाग्वैश्वदेवान्ते वा कर्तव्यः।

१, ५, ७

यस्याः कन्यायाः अभ्यात्मम् आत्मानं हृदयम् अभिलक्ष्यीकृत्य······

आत्मशब्देन हृदयं यतस्तत्राऽनुभूयते।
हृदयाऽभिमुखानीव यस्या अङ्गानि गुप्तितः॥
'कन्धरानाभिरङ्गाष्ठावुत्तरोष्ठश्च नासिका' इति कारिका।

१, ५, ८

तथा यस्याः केशान्ताः केशानामन्ता अग्राणि समा अकुटिला यस्याः सा तामुद्वहेत्।

१, ५, ६

ग्रीवायामावर्तौ भ्रमरौ प्रदक्षिणौ प्रादक्षिण्येन।

१, ६, २

कन्यावरणार्थं गमनविषये पुष्पाणि मल्लिकादीनां स्रजः। फलानि नारीकेलप्रभृतीनि ······वरपित्रादयो गच्छन्तीति वाक्यशेषः।

१, ६, ३

'वरपित्रादयः साचार्याः कन्यादातृगृहं गत्वा मण्डपे स्थित्वा' इति त्रिः कथयन्ति।······ उच्चैर्न्यायिरचर्चेद 'इत्युक्त्वाद्दुच्चैः कथनम्' दूराद्धूते टेः प्लुत उदात्त इत्युदात्तत्वात्।

१, ६, ४

उत्तरां दैवे प्राचीमेवैक इति वक्ष्यमाणस्य (१, ७, ४; ५) निषेधमाह। ततः कन्या—पक्षीयैरस्मल्लभ्या भवद्भ्याय देयेति उदिते उक्ते सति गृह्या गृहेभवा गृह्याः कन्यापक्षीयाः सर्वेपि बालवृद्धमहिलाः प्राङ्मुखा उपविशन्ति।

१, ६, ६

आचार्यः (वरपक्षाचार्यः) प्रत्यङ्मुखः······ कन्यायाः प्राङ्मुख्या मूर्धनि······ पूर्वोक्तां तां पूर्णपात्रीम् 'आ नः प्रजाम्' इति मन्त्रेण करोति स्थापयति, तथा प्रजां पद्मरुतेज इत्यादि-भिरितरैर्मन्त्रैर्भिरभिधर्षितस्तथैव मूर्धनि कन्याया आचार्यः करोति।

१, ७, ३

दक्षिणान्यामानि पित्र्याणीत्य (श्रौ. १, १, १४) स्याऽपवाद माह······पूर्वदक्षिणा च पूर्वोत्तरा च पूर्वे विदिशौ तयोः आग्नेयी ऐशानी च तयोर्या दक्षिणा पूर्वाऽऽग्नेयी तां पित्र्ये कर्मणि मासि-मासि पितृभ्यो दद्यादित्यादौ प्राचीं पूर्वां कल्पयेत्। आग्नेय्यां पितृकर्माणि विधेयानीत्यर्थः।

१, ७, ४

प्राङ् न्यायानि देवकर्माणीत्य (श्रौ. १, १, १३) स्याऽपवादमाह······पूर्वयोर्विदिशो र्या उत्तरा ऐशानी तां दैवे कर्मणि होमादौ प्राचीं कल्पयेत्।

१, ७, ५

एके आचार्या दैवे कर्मणि प्राचीमेव प्राचीमिच्छन्ति।

१, ७, ६

स्थण्डिलमध्ये उदक् संस्थानं स्थितिः यस्याः सा ता लेखां लिखित्वा प्रादेशमितां खड्गेन साग्निकाना निरग्नीनां स्रुवेण······कारिका :—

उदीच्यामुपरिष्टात् स्युः सर्वा. प्रादेशसम्मिताः।
स्फ्येन ममास्तु तत्र स्फ्यलेखा. स्युस्तस्य दर्शनात् इति॥

१, ७, ६-७ रामप.

तन्मध्ये दक्षिणत उदीचीं सरलां कुशमूलादिना लेखां लिखति। तस्य दक्षिणभागत उदक्-संस्थतया ता भिन्दन्नेव तदुपरि प्राचीः तिस्रोऽन्या लेखा लिखति, तासु प्रथमतृतीये दक्षिणतो ( दक्षिणोत्तरतो ? ) द्वितीया मध्ये स्यात्।

१, ७, ७

तस्या लेखाया उपरिष्टाद् उपरिभागे, दक्षिणतः—दक्षिणत आरभ्य ऊर्ध्वं पश्चाद् आरभ्य प्राक्नस्या रेखा कुर्यात्, ततस्तथैव मध्ये एका तथैवोत्तरत एकां लेखां लिखित्वा; एवमुक्तप्रकारेण उत्तराग्रामेका लेखा कृत्वा तदुपरि प्रागग्रं प्रादेशमितं लेखात्रयं कुर्यात्। ततस्ताभ्यो लेखाभ्य एकैकशः 'प्राक्तून प्राञ्चं समुदुह्य ताम्यएकैकशः ममात्' इति कारिका।

१, ८, १-६

सव्येन कुशानादायेति स्तरणशेषापदेशाद् ब्रह्मणि स्थापिते स्तरणं भवति न ब्रह्मणः (६) ब्रह्माणं पञ्चाशत्कुशनिर्मितम् (६) दक्षिणेन हस्तेन अपनीय स्तृणुयात्। एवं द्वितीयादिकं भाग स्तृणुयात्।

रामप. १, ८, १-११

तत सर्वार्थकुशपुष्पप्रणीतापात्रस्तरणकुशद्विदर्भ्यपविनच्छेदनपवित्राज्यस्थालीकुशमुष्टिस्रुवसमिदाज्यसमिधनयानि उत्तरत उपस्थापयेत् तत्तत्कर्मस्वपेक्षितद्रव्यान्तरं च। ततो दक्षिणतो ब्रह्मासनं कुशोत्तरमुत्तरतस्तु प्रणीतार्थमासनं कुशोत्तरं दद्यात्। ततः कुशमयं ब्रह्माणमुत्तरतो कृत्वा वे ( च ? ) पुरस्तान्नीत्वा दक्षिणत. कृत आसने भू र्भुव. स्वरिति प्रतिष्ठापयेत् तं च पुष्पैर् अलंकुर्यात्। ततः प्रणीतापात्रं सोदकं कृत्वा प्राञ्चं दर्भासने 'को वः प्रणयतीति' मंत्रेण प्रणयति। ततः परिस्तरणम्। यथा सव्ये पाणौ स्तरणयोग्यपृथक्कृतपञ्चकुशमुष्टिम् आदाय दक्षिण जान्वाच्य दैवे पित्र्ये तु वामम्, दक्षिणवरेण कुशान् धारयंन् प्रागग्रैस्तैरदगपवर्गतयाग्नेः पुरस्तात् स्तृणाति, पुनरग्रं स्तृतकुशमूलान्याच्छादयन् तत्पश्चात् स्तृणाति, पुनस्तथैव तृतीयमिति स्यावृत्तसे तु तथैव पञ्चवारम्।

१, ८, २४-२५

आज्योत्पवनानन्तरं स्रुवे आपः उदकानि स्थापनीयानि तत्र···स्रुवस्थितानामपाम्··· उत्पवनं करोति। (२५) तच्छब्दो यच्छब्दमपेक्षते। या. पूर्वं स्रुवे आप प्रणीतास्ताः प्रोक्षणीः

रामप.

त्यागपक्षे सा गौर्विवाह्य गृहमागताय चाचार्येणास्मै अर्घः कार्यः। तत्र लब्धा च गौर्वरस्यैव भवति।

१, १३, ४-६

( तु. शौसं. १४, २, ७१ ) अस्मिन्नवसरे चत्वारो द्विजाः सूर्यां ( ऋसं. १०, ८५ ) कन्यायै श्रावयेयुः शिष्टाचारात्, (६) स आचार्यः पुन्नाम्न अश्वत्थादेर्वृक्षस्य सक्षीरान् सदुग्धान् सपलाशान् सपल्लवान् कुशान् दर्भान् श्रोप्य प्रक्षिप्य।

रामप.

पुन्नाम्नो वृक्षस्याश्वत्थोदुम्बरादेः सक्षीरस्य नवपल्लवान् सकुशान्।

१, १३, १०

उदकुम्भमित्यारभ्य अश्मन स्थापनान्तमाचार्यकर्तृकम्। इति उत्तरमाचार्यः कारयति वरं वक्ष्यमाणम्, (१४) रैभ्यासीदित्यनेन।

१, १४, ५-१६

पदाक्रमणाद्याचार्यः कारयति, (७ रामप. वरो········आचार्यो वा) (८) कन्यावरयोर्मार्जनमाचार्यः कृत्वा ( रामप. ततो वरः ) (९) कन्याया वरस्य च मूर्धनि मस्तके आचार्योऽभिषेचनं करोति ततो मूर्धनीत्येकदेशे सप्तमी। (१६) गौरित्यनुवर्तते दुहितृमते अभ्रातृमती पित्रेऽधिको रयो यस्मिन् तद् गवां शतं दद्याद् अभ्रातृमतीविवाहदोषनाशार्थम् तामभ्रात्रीमुपयच्छेतत्सोकं ह्यस्य तद्भवति निरुक्ते निषेधात्। (तु. नि ३, ५)

१, १५, २-१२

हावक.········जपेत् ( रामप. आचार्यो जपेत् ) (६) शम्यागर्तेषु शम्यार्थं कृतेषु गर्तेषु (७) नित्या युगस्था एव या पुरातना शम्या (१२) तद्रथाङ्गसंस्कारानन्तरं स्वस्ति न इति स्वस्त्ययनं मार्गे कल्याणाय जपति।

१, १६, ७

अत्र सर्वत्र मन्त्रलिङ्गाद् वरस्यैव मन्त्रजपो नाचार्यस्येति ज्ञायते।

१, १७, १ रामप.

वध्वा अपि मन्त्रः। ( ८ प ) वर एव जुहोति पत्नी तूपतिष्ठते। ( ९ प ) इति सैव जुहोति, स्विष्टकृदादि वर एव।

१, १९, १-४

अध्याण्डा पर्णकलिनी··········एतत् कर्म भर्तैव करोति नान्यः पुंसवनसंस्कारत्वात्। (४) अनुप्राणनं कुर्यात् जायायामुच्छ्वासं निक्षिपेदित्यर्थः।

१, २०, ३-५

न्यग्रोधस्य वटस्य स्कन्धस्य मध्यमाशाखाया अन्त्यां शुङ्गामन्त्योद्गुररतस्य मूलं वा

पेषयित्वा। लताप्रपल्लवो वुम्नः शुङ्गेति परिकीर्तित इति कात्यायनः (कर्मप्रदीपे ३, ६, ६)... अग्निर् आहवनीयस्तस्याभिमुखां त्वचम्.......(५) एतत् कर्म भर्तृकर्तृकं गर्भसंस्कारत्वात्।

१, २१, १

गर्भरक्षणकर्मापि रक्षणार्थं न तु संस्कृतिरिति कारिका।

१, २२, ३-८

भर्ता......अपयित्वा......हुत्वा। ( ८ ) त्रिःश्वेता त्रिषु स्थानेषु श्वेता...... उदुम्बरशलाटुभिः अपक्वोदुम्बरफलैः सह साधं मध्यात् नाभिप्रदेशाद् ऊर्ध्वं सीमन्तं केशान्तं यावदुन्नयति।

१, २३

काकादनी काकवदली प्रसिद्धा, मेचकशाटिनी पंपोटीति लोके प्रसिद्धा, कोशातकी घोषावती, बृहती प्रसिद्धा कालक्षीतकं कालिपेसलिकेति (कालोङ्कहलोकेति) प्रसिद्धम्। रक्षसां नाशनार्थम् उपलेपनम् एतत् नतु गर्भस्य संस्कारः।

रामप.

काकादनी नामेन्द्रवारुणीभेदो बृहदारक्तफलः, मचकचातनीनाम पटोली, कोशातकी नाम देवदाली, बृहती नाम कण्टकारी, काक्षीतकं नाम कालघोरकेति प्रसिद्धम्।

१, २४,१-१२

(१) एतस्मिन्नेव सूतिकाग्नाविति वक्ष्यमाणत्वात् सूतिकाग्निस्थापनम्, तत्र होमः। (२) अन्ववान्यावघ्राय अनुप्राण्यात्, अनुप्राणनं मन्त्रेण ऋचेत्यादिना त्रिः, आघ्राणममन्त्रकम्।

(५) निरस्तूष्णीमवजिघ्रेत्, अथ ऋचा प्राणीहीत्यनुप्राण्यात् (७) अथ घृष्टानि कारयित्वा। (१२) आ उत्थानाद् यावत् सूतिकागेहान् निःसरति तावद् बध्वा।

१, २५, १-७

उत्थानं सूतिकाया इति शेषः, (४) एतस्मिन्नेवेति ज्ञापकात् पूर्वं सूतिकागृहेऽग्नी रक्षणार्थं धारयितव्यः, तत्रैव जातकर्म विधेयम्। (७) आयुष्ट इत्येका आयुर्दा इत्येका। तु. आश्वी (२, १०, ४)

१, २६

अग्नय इत्यादिकं क्षेपकमपि स्पष्टं देवताज्ञानाय व्याख्यायते।

१, २८, ७

आनडुहं रोहितं चर्म.......गोमयं च तस्यैवानडुहश्चकारात्, अनन्तरं कुशभित्तं समूलं कुशम्.......।

रामप.

आनडुहं चर्म...गोमयं कुशखण्डं च नेत्रग्रहणाय आनडुहं गोमयम्...।

२, १, २१

प्राणो वायुः, तस्य निर्गमनस्थानं नासिकाग्रम्, तत्संमितो ब्राह्मणस्य दण्डः कार्यः । न तु प्राणमात्र एव । संमातुमशक्यत्वात् ।

२, २, ३

अजिनमन्त्रमाह माध्यन्दिनगृह्ये मित्रस्य चक्षुर्''''दधेऽहमिति अनेन मन्त्रेण माणवकस्य वामस्कन्धे अजिनं मेखलोपवीतपूर्वकं धरयति ।

२, २, ६-११

समानार्षेयो भवानु ब्रूहीत्याचार्यो वदति । अत्र भवान् ब्रूहीति ब्रह्मचारी भवान् ब्रूहीत्यत. सिंहावलोकनन्यायेनात्रानुपज्यते । (११) दक्षिणोत्तराभ्यां दक्षिण उत्तर उपरि ययोस्तौ ।

२, ३, ५

आचार्यो ब्रह्मचारिणो हृदये''''हस्तं निधाय ।

२, ४, २

काम इच्छा, सा (सद्) गुरोः शिष्यस्य वा आचार्याधीनं तदित्युक्तत्वाद् आचार्यस्यैव । संवत्सरत्रिरात्रान्वक्षादीना वक्ष्यमाणकालानामन्यतरस्मिन् काले ब्रह्मचर्यस्य असाविति सम्बुद्ध्यन्तं माणवकनाम गृह्णीयान् मम व्रत इति मन्त्रान्ते । ब्रह्मचर्यशब्दो विशिष्टाचारयमनियमादिसमूहवाचकोऽपि तदात्मकेषु पञ्चसु व्रतेषु सावित्र-शुक्रिय-शाक्वर-व्रातिकौपनिषदेषु द्रष्टव्यः तेषु शाक्वरव्रातिकौपनिषदानि त्रीणि व्रतानि वक्ष्यमाणकालानि सांवत्सरिकानि शाक्वरं तु संवत्सरं व्रातिकमौपनिषदं चेति वक्ष्यमाणत्वात् शुक्रियमाचार्य इच्छया सावित्रं विकल्पत्रययुक्तं संवत्सरे सावित्रीमन्वाह त्रिरात्रे अन्वक्ष वेति वक्ष्यमाणत्वात् । तदर्थमिदं कामस्य ब्रह्मचर्यस्येत्युक्तम्, अयमर्थः नियुनक्तु मह्यं सांवत्सरिकस्य त्रैरात्रिकस्य वा ऽन्वक्षिकस्य वा सावित्रस्य ब्रह्मचर्यस्यामुकामुकशर्मन्निति वाक्यसयोगो ज्ञेय ।

२, ५, ६

अध्यासीनो दिशमेका प्रशस्ता प्राचीमुदीचीमपराजितां वा । एकः श्रोता दक्षिणतो निषीदेदिति (ऋप्रा. १५, २) एतन्निषिध्यतेऽनेन सूत्रेण ।

२, ७, ६-२७

हस्ताभ्याम्'''कुशानु मध्ये मध्यदेशे माणवक. परिगृह्य । (१०) तत् सवितुरित्यृचम् (ऋमं ३, ६२, १०) इत्यर्थः । ब्राह्मणस्य एतत् सावित्रीप्रशंसात्मकोऽनुवादः । क्षत्रियवैश्ययोस्तु ऊहः कर्तव्यः शब्दविकारस्य., शब्दविकारमूहं ब्रुवत इति (श्रौ. ६, १, ३) कल्पोक्तेः । त्रिष्टुभं भो३ अनुब्रूहीति इतरः, त्रिष्टुभं तेऽनुब्रवीमीत्याचार्यः''''हैरण्यस्तूपो भो३ अनुब्रूहीतीतरः । हैरण्यस्तूपी तेऽनुब्रवीमीत्याचार्यः (ऋमं. १, ३५, २) इति क्षत्रियस्य । जगतीं भो३ अनुब्रूहीतीतरः जगतीं ते अनुब्रवीमीत्याचार्यः हैरण्यस्तूपो भो३ अनुब्रूहीतीतर. हैरण्यस्तूपी ते अनुब्रवीमीत्याचार्य. (ऋसं. १, ३५, ६)'' वामदेवो भो३ (ते) अनुब्रूहीतीतरः, वामदेवी ते अनुब्रवीमीत्याचार्यः (ऋसं. ४, ४०, ५) इति वैश्यस्य । (१६) अपि वेति पक्षान्तरे । आचार्यो मन्त्रगतान्यृषिदैवतच्छन्दांसि अविदन् अजानन् प्रतिदिनं समाप्ते परिसमाप्तेऽनुवचने यथाभिल-

२, १३, ८

न हि ते क्षत्रमित्यनया (ऋसं १, २४, ६) जुहुयात्……, वेदानां रसभूतेन प्रणवेन।

२, १४, १-२१

अथेत्यनेन गृहस्थोऽधिक्रियते……वैश्वदेवाधिकारी स्यात् गृहस्थः सह भार्ययेति कारिका। ब्रह्मचारिप्रकरणे असमाप्ते वचनम्। कार्यादिना प्रोषितस्याचार्यस्य पितु र्वोत्प-दिशम्बाद् ब्रह्मचारी तदीयं वैश्वदेवं कर्म कुर्यादिति ग्रत आह। (२) अग्निकार्यप्रकरणे यो होमकल्पः परिसमुह्य पर्युक्ष्य दक्षिणं जान्वाच्येत्यादिवः (२, १०, ३) संनिकृष्टत्वादिह शेषः। व्याख्यातः प्रतिश्रुते होमकल्पः (१, ६, १६) इत्युक्तं प्रतिश्रुता विधानं प्राप्नोति तन्निवृत्त्यर्थं व्याख्यातो होमकल्प इत्युक्तम्। (८) गृह एव आदित्यमण्डले आदित्यमण्डलरूपे मण्डलाकारे। (२१) सौवासिनीं स्वगृहे स्थिताम् अविधवां पुन्यादिप्रभृतिका स्त्रियम्। गर्भिणी गर्भयुक्ता प्रियं, कुमारान् आमोञ्जीवन्धनात्।

२, १५, ८-१०

प्रियाय जामात्रे। (१०) अन्य आचार्यश्वशुरराजस्नातकजामातरः संवत्सरं सद्दृतेना-(सद्वृत्-कृतेना ?) र्घ्येण कृतार्घ्या भवन्ति, संवत्सरान्तरमर्घ्ययोग्या।

२, १६, ३

एकग्रामीणमेकग्रामस्थितमतिथिं न विद्यात् जानीयात्। तमप्येकग्रामीणं चिरप्रोष्य विदेशेषु प्रवासं कृत्वा आगतं गृहे अतिथिं विजानीयात्। पुनः कीदृशम्? गृहे उपस्थितं समागतम्, न मार्गे मिलितम्। गृहशब्दस्य विवरणम्: यत्र गृहे मनस्पती (?) वा भार्या कलत्र-मपि वा अग्नयो अग्निहोत्रस्य यत्र, तं गृहं न निवासस्थलमेव।……आर्येदस्तं मघवन्से-द्युयोनिरिति श्रुतिः (ऋ ३, ५३, ४) अतिथिरभ्यतिथो गृहान् भवत्यभ्येति तिथिषु परकुलानीति वा गृहाणीतिवेति नैरुक्ते।

रामच.

अतिथिस्त्वैकग्रामस्थो न भवति, देशान्तरं गत्वा समागतस्त्वेकग्रामस्थोऽप्यतिथिः। आतिथेयं च यत्र भार्या यत्राग्नयस्तत्र पारमते, न तु प्रवासादौ।

३, १, ८, १२

शिरोवेष्टनं बध्नाति। (११) आचार्यो माणवकाय……आदत्ते प्रयच्छति। (१२) प्रतिलीनो गुप्तवृत्त्यातिष्ठेद् न वृथा पर्यटनं कार्यम्।

३, २, ५, ६

द्वारिभवौ द्वार्यौ, तयोर्दक्षिणे……पूर्वस्या दिशि। (६) पूर्वस्यां दिशि उत्तरतो द्वितीये गर्ते (८) मध्ये वर्तमाना स्थूणा स्थूणाराजः सकलगृहस्य भारक्षमत्वात्। (६) एनं कुमार इत्य आरभ्य स्वमायेत्यन्तेन पदवसानयुक्तेन मन्त्रेण स्थूणाराजं मध्यस्तम्भम् अभिमृशति। तस्य सस्पर्शनं करोति।

३, ४, १

वास्तोष्पतीये गृहप्रवेशाख्ये कर्मणि विधिं व्याख्यास्याम इति वाक्यशेषः।

३, ५, २-३

अरिक्तो न रिक्तः समित्पुष्पकुशादिसहितः । (३) (तु० आश्वश्रौ २, ५, १७)

३, ६, १

(घोषिण्य इत्यनेन वायवोऽभिप्रेयन्ते) तु० श्रौ ४, १६, ६ रुद्रसेनाभ्योऽनुदिशति, आघोषिण्यः प्रतिघोषिण्यः संघोषिण्यो विचिन्वत्यः श्वसनाः क्रव्याद एष वो भागस्तं जुषध्वं स्वाहेति ।

३, ११, ८-६

स्वपरिमाणेन गोमया वा छादयति मय करोति । (६) वृष. वत्सरीवर्गोऽस्य वृषभं छादयेत् वस्त्रनतया प्रावृत्य तिष्ठति । स वा वृषभमित्यलङ्कृत्येति पूर्ववत् ।

३, १२, ३

मन्त्रादिष्टदेवतात्वात् मन्त्रगता उषा देवता । तत्र ग्रहणासादनप्रोक्षणेषु उषसे जुष्टमिति सर्वत्र ।

३, १३, १-५

गार्ग्य(शौर्य) पौषमाघस्याना निमृणामष्टकाना मध्ये या मध्यमा पौषकृष्णाष्टमी तस्याम् ·······अनन्तरं मध्यावर्षं वर्षस्य मध्यं मध्यावर्षम्; चैत्रतो द्वादशमासात्मकं वर्षं भवति; तन्मध्यस्थो भाद्रपदो मासः षष्ठो भवति, तस्य कृष्णाष्टम्या अपराह्णे पितृयज्ञेन चरन्तीति श्रुतेः (कौषीतकि ब्राह्मणम् ५, ६) तयो र्मध्यावर्षमध्यमाष्टक्योः समानधर्मत्वात् सहकथनम् । (२) अनयोरष्टकयोर्गोपशुर् अजपशुरिति पक्षावग्रे वक्ष्यति (३, १४, ३) तत्र गोपशुपक्षे च शूलगवोक्तं विधानं वेदितव्यम् । (५) अन्यप्रकरणोऽन्यजातः पुरुषः······, अमुष्या इत्यत्र स्वमातृनामग्रहणम् ।

३, १३, ३-४

मध्यममध्या (वर्षा) ष्टकयोरेते विकल्पाः । (४) अत्रापि सिंहावलोकनन्यायेन एषा मेऽष्टका इति मन्त्रमाहुः ।

४, १, २ रामप.

दैविकार्थं युग्माना वेदविदामामन्त्रणम् प्रथमपक्षे द्वयोरपि, पैतृकार्थं त्वयुग्मानामामन्त्रणम् प्रथमपक्षे त्रयाणामपि, मात्राद्धार्थं च तथा ब्राह्मणान् आमन्त्रयेत मातामहानामप्येवमिति स्मृते र्मातामहार्थमपि ब्राह्मणान् आमन्त्रयेत । (१३) पिण्डपितृयज्ञोऽपराह्णे (शांश्रौ. ४, ३, १) इत्यादिना ।

४, २, ५-८

अक्षय्यस्थाने (रामप.) तनोऽदो गोत्रस्यास्मत्पितुर् अमुष्याऽस्मिन् श्राद्धे यद् दत्तं तद् अक्षय्यमस्तु उप तिष्ठतामिति वदेत् । (८) संवत्सरानन्तरं सपिण्डीकृते सति चतुर्थस्य प्रपितामहपितु र्विसर्गो विसर्जनं भवति । चकारात्प्रथमस्य सपिण्डन विधिना संसर्गः कार्यः । क्षयाहे पार्वणैकोद्दिष्टयोर्विधिना यथाकुलं पार्वणं वैकोद्दिष्टं कर्तव्यम् ।

४, ३, २

त्रिपक्ष स्तृतीयः पक्षस्तत्र सार्धे मासे वा अथवा त्रिभि दिवसैर् ऊहः पक्षस्त्रिपक्षो द्वादशाहस्तत्र वा।

४, ५, ८

कुपुम्भक (ऋ १,१६७१६) इत्यादय ऋचो मण्डलान्त्यभूता स्त्वमग्ने द्युभिरि (ऋ २, १, १) त्यादयो मण्डलादिभूताश्च प्रत्यृचं होतव्याः। मण्डलान्त्यभूता मण्डलादिभूता एवं ऋचो विज्ञेयाः। अत्र ग्रहणे विशेषः। कुपुम्भकोऽगस्त्योऽतृणसूर्याअनुष्टुप्। कुपुम्भकस्त-दब्रवीन् (ऋ १,१६७,१६) त्वमग्ने द्युभिस्त्वमग्ने गृत्समदो जगती। त्वमग्ने द्युभिस्त्व-माशुशुक्षणिः (ऋ २, १, १)। आवदत्गृत्समदो शकुनो जगती। आवदंस्तं शकुने भद्रमावद (ऋ २, ४३, ३) सोमस्य मा विश्वामित्रोऽग्निस्त्रिष्टुप् सोमस्य मा तवसं वक्ष्यग्ने (ऋ ३, १, १) गृणानाजमदग्निर्मित्रावरुणौ गायत्री। गृणाना जमदग्निना (ऋ ३, ६२, १८) त्वं ह्यग्ने वामदेवोऽग्निरष्टिः। 'त्वां ह्यग्ने सदमित्समन्यवो (ऋ ४, १, १) धामन्ते वामदेवोऽग्निर्जगती। धामन्ते विश्वं भुवनमधिश्रितम् (४, ५८, ११) अबोध्यग्नि बुधगविष्ठिरावग्निस्त्रिष्टुप्। अबोध्यग्निः समिधा जनानाम् (ऋ ५, १, १) गन्ता न एवया मरुन्मारुतोऽतिजगती। गन्तानो यज्ञं यज्ञियाः सुशमि (ऋ ५, ८७, ९) त्वं ह्यग्ने भरद्वाजोऽग्निस्त्रिष्टुप् त्वं ह्यग्ने प्रथमो मनोता (ऋ ६, १, १) यो नः स्वो बायुदेवानुष्टुप्। यो नः स्वो अरणः (ऋ ६, ७५, १९) अग्निनरो वसिष्ठोऽग्नि विराट् अग्नि नरो दीधितिभररण्योः (ऋ ७, १, १) प्रतिचक्ष्व-विष्ठ इन्द्र सोमावनुष्टुप्। प्रतिचक्ष्व विचक्ष्व (ऋ ७, १०४, २५) माचित्प्रगाथ इन्द्रबृहती। मा चिदन्यद्विशंसत (ऋ ८, १, १) आग्नेया हि सोमभिरग्ना मरुतोऽनुष्टुप्। आग्ने याहि मरुत्सखा (ऋ ८, १०३, १४) स्वादिष्ठया मधुच्छन्दा. पवमान सोमो गायत्री। स्वादिष्ठया मदिष्ठया (ऋ ९, १, १) यत्ते राजन् कश्यप. पवमानसोमपङ्क्तिः। यत्ते राजन् छृतं हविः (ऋ ९, ११४, ४) अग्ने बृहस्त्रितोऽग्नि स्त्रिष्टुप्। अग्ने बृहन्नुषसामूर्ध्वो अस्थात् (ऋ १०, १, १)।

तच्छंयोरावृणीमह इत्येका। तच्छंयोरित्येनया एवाहुति र्होतव्या इति करणः प्रधान होम समाप्ति सूचनार्थः। तच्छंयो. शंयुर्विश्वेदेवाः शक्वरी 'तच्छंयोरावृणीमहे' अग्निमीळे इत्यारम्य तच्छंयोरित्येता विंशति राहुती र्जुहुयात्। ततः स्विष्टकृद्धर्मेण ? स्विष्ट कृदाहुतिः

४, ५, १७

क्षपणं छन्दसां विराम. अनध्यायः।

५, ६, ६

यदि अवश्यमधीयीरन् तदा अहोरात्रमेकं दिनमुपरम्य विरामं कृत्वा प्राध्ययनं कुर्युः।

४, ७, २

उत्पाता पांसुवृष्ट्यादयस्तेषु, आकालं कालमभिव्याप्य इतिकालम् (इत्र् आकालम् ?) अनध्यायः, तत्कालमारम्य यावद्स्यपरेद्यु (यावत्स्यरेद्युः यावत् सोऽपरेद्युः ? यावत् स्वपरेद्युः?) कालम्नावद् अनध्याय इत्यर्थं। (४) त्रिसन्ध्यम् अहोरात्रम्। (५) एकां श्राद्धभोजने सन्ध्या-

मित्यनुवर्तते·······अत्र सन्ध्याशब्देनाहः शेषो रात्रिश्च लक्ष्यते। (६) अयं सपिण्डसोदकयो मंरणम्। (७) चकारात् शुक्लकृष्णया प्रतिपत् तत्रापि नाधीयीत। प्रतिपत्सचतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः। अनध्यायं प्रकुर्वीत मन्वादिषु युगादिष्विति हारीतः। (८) नाभौ भवानि नभ्यानि, नाभिशब्दो मध्यवचनः, वासराणि दिनानि वासरं स्वसराणीति (निघण्टु १, ६) अहर्नामसु पाठात्। मध्यायस्थानां पञ्चर्तवमध्यस्थाना ऋतूनां ग्रीष्मवर्षाहिमन्तानाम् आदिभूतान्यहानि तेषु नाधीयीत। त्रिनाभि चक्रं स्मृतु. संवत्सरो ग्रीष्मो वर्षा हेमन्त इति यास्कः (४, २७)। चकारात् सर्वेषामपि आदिभूतान्यहानि तेष्वपि नाध्ययनम्। ऋतूनाम् आदिभूतेषु दिनेषु नाधीयीरन् इति विष्णुस्मरणात्।

७–८ रामप.

चतुर्दश्याम् अमावास्याम् अष्टम्यां च स्मृत्युष्टकाद्यादिदिनेषु च अन्येषु च युगादिमन्वादिदिनेषु स्मृत्यन्तरोक्तेषु तथानध्यायद्वयान्तरदिनेषु अयनादिविषुवद्विष्णुशयनबोधदिनेषु।

(४३) गात्राणामुद्वर्तनम्। (४३) कल्पे सूत्रे अध्येतव्ये उपाकर्मकरणादूर्ध्वं वर्षवत् अवर्षत्सु सार्धपञ्चमासेषु अनध्यायः परन्तु विद्युत्स्तनयित्नुवर्षवर्जम्।

रामप.

कल्पे तूपाकरणानन्तरं सार्धपञ्चमासेष्वध्येतव्येऽप्रवर्षणं नानध्यायहेतुर्विद्युत्पातश्च नानध्यायहेतुः, वेदपाठ एव तयोर् अनध्यायहेतुत्वम्, अन्येऽनध्यायहेतवस्तु कल्पेऽपि तुल्याः।

४, ८, १४

तेन ओङ्कारेण सन्ततमविच्छिन्नं शिष्योऽधीयीत। (१६) इत्युक्त्वा यथार्थं यथाकार्यं मूत्रपुरीषाद्युत्सर्गार्थं व्रजेयुः। (१७) विरताः स्मेत्यत्र विसृष्टमित्युक्त्वा विरामस्ताद्वत् इत्युक्त्वा वा यथाकार्यं व्रजेयु.। (१६) अधीयानोऽध्ययनं कुर्वाणः शिष्य आत्मानं न विपरिहरेत्, शिष्येणाध्ययनमन्तरितं न कुर्यादित्यर्थः। (२०) यदि कदाचिद् आचार्यशिष्ययोरन्तरा मार्जारादिगमने दोषः स्यात्।

१६–२० रामप.

पठन्नेव छात्रः परिषदो व्यतिरिक्तो न भवेत्, भवंस्तु दोषभाक् स्यात्, तत्परिहाराय प्रायश्चित्तानि चत्वारि······

४, ११, १०

मण्डूकप्लुतिन्यायेन भार्येत्यनुवर्तते। (११) भार्येत्यनुवर्तते······न भार्यानुक्तदोषं तु अन्नमयाद् अनापदीति स्मृतिः।

४, १२, ६

उकार आदरार्थे वीप्सार्थे वा। (१०) यदि कदाचित् सभा व्रजेत् तर्हि समेत्य एकवाक्यतया मिलित्वा कस्यापि उपरि उपघातार्थं नोऽद्दिवेत्? (११) स्यादिति प्रत्येकं सम्बध्यते ······कुलं-कुलं गृहं-गृहं गच्छतीति कुलङ्कुलो न स्यात्······यद्वा कुलः सकुतः पुत्रकलत्रादि-

सहितः, कुलं नीडाश्रयं जर्जरीभूतं वृक्षं न गच्छेदिति वा। इतिहेतिः इति अमुना प्रकारेण अस्य पुरुषस्य स्त्रियो वा हेति (ः) श्रेष्ठा तत्स्थापको न स्यात्।

रामप.

न वृथा गृहे पर्यटेत्, जनवादप्रकाशकश्चासमीक्षितकारी न स्यात्।

(१६) नर्दति पर्जन्ये न धावेत्, न वीक्षेतात्मनो रूपमाशु धावेन्न न वर्षयति इति स्मृतिकरण्डिका।

४, १४, ४

उन्नीयम् उत्क्षेपं जुहुयात्। (५) वामिष्ठं सूक्तं ऽऽवसंज्ञकम्, वामिष्ठऽऽवयो ग्रहणं सूक्तस्तुत्यर्थम्।

४, १५, ६

वक्ष्यति त्रिस्त्रिर् उच्चैस्तराम्-उच्चैस्तरां पूर्वं नीचैस्तरां-नीचैस्तरामुत्तरमिति। तस्मिन् स्थापिते कुम्भे स्थापनद्वय (स्थानद्वयम् ?) उत्तराधरतया परिकल्प्य तयो र्यद् उच्चैस्तिष्ठति तस्मिन् दिव्यानां सर्पाणामधिपतिर् अव नेनिक्ष्वामिति अनेन मन्त्रेण त्रिः आवृत्तेन त्रिर् अपो निनयति दक्षिणहस्तेन देवतीर्थेन, ततः पूर्वस्मान् नीचैं र्यत् स्थानं तिष्ठति तस्मिन् दिव्याः सर्पाः अव नेनिजतामिति मन्त्रेण त्रिर् आवृत्तेन त्रिर् अपो निनयति। (७) फणेन काष्ठमयेन फलकेन चेष्टयति सर्पाङ्गति फणेन करोतीत्यर्थः।

रामप.

फलकेन काष्ठमयेन स्पृशति।

(११) उपघातं प्रक्षेपम्। (१४) एवमुक्तप्रकारेणोदकुम्भे स्थलान्तरे तथैव स्थानद्वयमुत्तराधरतया परिकल्प्य उत्तरे आन्तरिक्षा अधिपतयोऽधरतने आन्तरिक्षाः सर्पाः। (१७-१८) पूर्वमन्त्रवचनं क्रियायुक्तं दिव्यानामिति त्रिस्त्रिर् अभ्यमेत् इतरस्मात् प्रदेशात् उच्चैस्तराम्-उच्चैस्तरां कुर्यात्, अयमर्थः, अधिपतेः सर्वस्माद् अपि प्रदेशाद् उच्चैः स्थानता कार्येत्यर्थः ..., उत्तरमन्त्रवचनं क्रियायुक्तं दिव्याः सर्पा इति अधिपते स्थानात् नीचैस्तरां त्रिस्त्रिर् अभ्यमेत्।

४, १८, २

गुहेमन्त इति मन्त्रेण जपः कर्मसंयोगात्, तत्र स्विष्टकृदादि तन्त्रशेषसमापनम्।

४, १९, २

यथोपपादं यथासम्भवम्, मिथुनाना चक्रवाकादीना, कर्कन्धुपर्णानि कर्कन्धुर-आरण्य-बदरी, तत्पत्रवत् पत्राणि पिष्टानि पिष्टस्य यवपिष्टस्य तण्डुलपिष्टस्य वा कृत्वा ततः, मिथुनानां पत्राणि पिष्टानि बदरीपत्रवत् कार्याणीत्युक्तत्वात् मिथुनानामप्याकृतिः कार्या। (३) तुन्दिलः बृहदुदरः पुरुषः निश्शिरो बृहन्मुखः पिष्टस्य कार्यः। (४) त्रयो गोलकाः। (५) नक्षत्राणि कृत्तिकादीनि च, पुनः अन्याकृतयस्तेषा नक्षत्राणामाकृतयो लोकतोऽन्यदास्ततो गावेषणीया (गवेषणीयाः ?)।

५, १, २

यदा आत्मनि अग्नेः समारोहणं करोति तदा एहीति मन्त्रेण······सकृद् अग्ने समारोहणम्, तूष्णीं द्विः समारोहणम् ।

५, २, १

पुष्करिण्यादिजलाशयानामुत्सर्गरूप कर्म वक्ष्याम इति वाक्यशेषः ।

५, ३, १

आरामप्रतिष्ठोद्यानप्रतिष्ठाकर्मोच्यत इति वाक्यशेषः । (२) आरामोत्सर्गकर्मणि हिरण्यं सुवर्णं दक्षिणात्वेन देयम् ।

५, ४, १

कारिका—

परिशिष्टादावसथ्ये पार्वणातिक्रमे चरुः ।
वैश्वानरायाग्नये वा (चा) ग्नये तन्तुमते तथेति ॥

(३) सायंप्रातर्होमातिक्रमे प्रायश्चित्तमिदं वक्ष्यमाणं ज्ञेयमिति वाक्यशेषः । (६) एवमापत्तिवशाद् यावन्तो होमा अतिक्रान्तास्तावन्त आज्यस्रुवाः परिगृह्य हुत्वा पूर्ववद् व्रीहिभि र्वा (व्रीहिभि र्यवै र्वा) सायंप्रातर्होमा विधेयाः ।

५, ७, २

यदि बाल अकृतजातकर्मासीत्, तदा नामकरणकाले एकादशदिने जातकर्मकालातिक्रमनिमित्तं प्रायश्चित्तं कृत्वा तज्जातकर्मकालः । (४) पूर्वमकृतत्वात् मातृयागं कृत्वा लौकिकाग्नि स्थाप्य···सीमन्तकर्मप्रधानाहुति (० तीर्) हुत्वा कर्मसमापनम्, गर्भाधानादिकं कर्म सीमन्तेनोपलक्षितमिति कारिकोक्तत्वात् । ततो भिन्नस्थण्डिले जातकर्मार्थं सूतकाग्निं संस्थाप्य ···अन्नप्राशनादिकं कर्म विधाय नामकर्माख्यं कर्म कार्यम् ।

रामप.

अकृते सीमन्तोन्नयने प्रजायेत चेत्, तदा···सीमतोन्नयनवद् सर्वं कर्म हुत्वा···· ।

५, ८, ६

(तु. ४, ३) एवमुक्तप्रकारेण पूर्वमारिष्याः पूर्वमृताया मातुः एभिस्त्रिभि पिण्डैः प्रक्षिप्य प्रेतपिण्डैः संसृज्य सपिण्डं कार्यम् ।

५, १०, ३

परिभाषासूत्रमेतत् । (४) परिभाषेयम् । (६) मातृकृष्णाष्टकायाम् पितृयज्ञवद्धोम इत्युक्तत्वात् प्राचीनावीतिना कार्यः, अपसव्येन दक्षिणामुखतया च ।

५, ११, २

महाशान्ति सग्रहा विनायकशान्तिम् ।

६, १, १

अथ शक्रादीनां त्रयाणां व्रतानां पूर्वोक्ताना विशेषविधानार्थं षष्ठाध्याय चिकीर्षन्न्

आचार्यः पुनः प्रारभते अर्थात् इत्यादिना···स्वाध्यायलक्षणस्य आरण्यकस्य। (२) अथ व्रतादेशनम् (२, ११, १) इत्यारभ्याथातो दण्डनियमा (२, १३, १) इत्येतत्पर्यन्तं संक्षिप्योक्तं पुनर्विशदीकरोत्याचार्योऽहोरात्रमित्यादिना (३-५-तु. २, १२, १०) (४) सिंहादयः शवरूपा लोके उच्यन्ते 'शशको मृगयु र्व्याघ्रः सिंहः श्वा गर्दभो वृकः। शववद् दर्शनं तेषां रहस्यं वर्जयेत् सदेति पाराशरः। (५) यानि पश्वादीनि ग्रासेन मुखेन प्रविशेयुः बिले प्रवेशनं कुर्वन्ति तेषां दर्शने चानध्यायः ते च सर्पादयः प्रसिद्धाः। (८) ग्रामाध्ययने ग्राममध्याध्ययने यानि अहानि दिवसाः पर्वर्हितानि शवादिना तेष्वनध्यायः। (९) अनवक्लिप्तः असावधानोऽशारादिना (?) यदा तदा त्रिरात्रोऽनध्यायः

व्याधिना परिभूतो य आधिना वा समाहितः।

तस्य त्रिरात्रोऽनध्यायः सोदके च मृते तथा। इति कार्ष्णाजिनिः।

(११) अर्धशब्दः प्रत्येकमभिसम्बध्यते। पर्वणाम् अमावास्यापौर्णमासीनामह्नः दिवसस्य उपार्धानि पूर्वार्धानि चतुर्दशीरूपाणि तेषु अनध्यायः, तथा पर्वणामह्नः दिवसस्य उत्तरार्धानि प्रतिपदादिरूपाणि तेष्वनध्याय.। चकाराद् अष्टम्यादिष्वनध्यायः।

६, ७, १

अध्ययनं न कार्यमुपनिषद। (५) मण्डलकरणं चोदकधारया तूष्णीम् अनुक्तत्वात्। (६) जनैर्लोकैर् अग्नीयं मुख्यं स्तुत्यमित्यर्थं। एवं सर्वं कार्यम्। यथा लोकाः स्तुतिं कुर्वन्ति। (७) उत्तरानन्तरा शान्ति., वामदेव्यं कया नश्चित्र इति समभिव्याप्य इत्यावामदेव्यम्। (८) अथ शाक्करादिव्रते प्रणवादिव्याहृतिम् आरभ्य गायत्र्यादिदशर्चम्। पुन आध्येषणं प्रकर्षेणाध्ययनं प्रश्नोत्तरं पुन. विधेयम्। (९) शरीरवशत्वात् मूत्रपुरीषाद्युत्सर्गे कृते बहिर्मण्डलात् लौकिकोदकैः शुद्धिं कृत्वा कर्मशुद्ध्यर्थं शान्तिपात्रोदकेनाचमनं विधाय शेषमध्ययनं विधेयम्। (१३) इतिपूर्वोक्तं सर्वमनध्यायाद् आरभ्य मण्डलादिकरणं भाषितं परिभाषितं शेयमित्याचार्योक्तिः।

६, ३, ७

अथानन्तरम् अपिन्वमानैः पाणिभिरिति द्वितीयार्थे तृतीया आचार्य. स्वौ हस्तौ निर्णिक्तौ सार्द्रौ शान्तिपात्रे पूर्वं स्थापिते दूर्वाकाण्डवतीषु दूर्वाङ्कुरवतीषु अप्सु उदकेषु आधाय संस्थाप्य तत. शिष्याणां पाणिभि. पाणीन् हस्तान् सार्द्रान् संस्थाप्य प्राधीयीरन् प्राध्ययनं चरः (कुर्युः ?) किंविशिष्टैः पाणिभि ? अपिन्वमानैः अपिन्वमानान् असंसृष्टान्, गयमर्थः, आचार्यः स्वै र्हस्तैस्तेषां हस्तैश्च पात्रमाच्छाद्य आध्ययन कारयति। (तु. गोगृ ३, २; अपां समयां पूरयित्वा सर्वौषधी. कृत्वा हस्तान् अवधाय। ८) एक कश्चित् शान्तिभाजनं शान्तिपात्रम् अशून्यं हस्तेन कुर्यात्। आचार्यस्तु नियत एव। उत्तरतोऽग्ने करो मणि कृत्वेत्यारण्यके (कौषिग्र १२, ८) उक्तत्वात् वारणपात्रे मणि पाषाण स्थाप्य, दधिमधुसंयुक्ताः सक्तवो मन्थसंज्ञक स्थाप्यश्च दधिमधुभ्यामुपमन्थ्येति (६, ८) उक्तत्वात्। (९) प्राधीयीरन्निति पूर्वमुक्तम्। तत्र विशेषविधानमाह। सर्वे साचार्या. शिष्या. अध्याप्याध्यापकयो ···शान्तिपात्रे हस्तान् आधाय श्रवणं (श्रावणम्) कुर्युः। शिष्यैर्यथा श्रोत्रं शक्यं भवति तथाचार्येण पठनीयम्। तद् यथा प्रजापति र्वै संवत्सरः (१) नैवंविदुषोऽप्रतर्दः १, हिङ्कारेण प्रतिपद्यत एतदुक्थमित्यादि १, (कौषिग्र १, १, ८; २, १)

मिति ऋचा प्रणवेन वोदकेषु निक्षिपेत् (२, १३, ८)···! अत्र शाकरादीनामन्ते यासु देवतासु दत्ताः शिष्यास्तेभ्यो वैश्वदेवः चरुः कार्य इति माण्डूकेयमतम्—अपराह्णेऽस्तवाना‌नां भिक्षणादि (२, ८, १) पूर्ववद् होमो लौकिकाग्नौ (तु. २, ८, १) इत्येवम् अत्रानुक्तं सर्वं पूर्वस्मात् प्रकरणाद् ऊहनीयम् । ततः समावर्तनम् । द्विरभ्यासो अध्यायसमाप्तिसूचनार्थो मंगलार्थो वा ।

---

शाङ्खायनगृह्यस्थौ

# श्रुत्यन्तरीय-संवादविसंवादौ

| शांगृ. | ऋसं० |
| --- | --- |
| १, ४, २ अद्या नो देव सवितः | ५, ८२, ४ अद्या नो देव सवितः |
| ,, ,, ,, अपेहि मनसस्पते | १०, १६४, १ अपेहि मनसस्पते |
| ,, ,, ,, ऋतं च सत्यं च | १०, १९०, १ ऋतं च सत्यं चाभीद्धात् |
| ,, ,, ,, आदित्या अव हि ख्यत | ८, ४७, ११ आदित्या अव हि ख्यत |
| ,, ,, ,, ३, १, १६० इन्द्र श्रेष्ठानि | २, २१, ६ इन्द्र श्रेष्ठानि द्रविणानि धेहि |
| ,, ,, ,, हंसः शुचिषत् | ४, ४०, ५ हंसः शुचिषद् वसुरन्तरिक्षसद् |
| ,, ,, ,, नमो महद्भ्यः | १, २७, १३ नमो महद्भ्यो नमो अर्भकेभ्यः |
| ,, ,, ,, ६, ५, ६ यत इन्द्र भयामहे | ८ ६१, १३ यत इन्द्र भयामहे |
| ,, ,, ,, अथ स्वप्नस्य | १, १२०, १२ अथ स्वप्नस्य निर्विदे |
| ,, ,, ,, यो मे राजन् | २, २८, १० यो मे राजन् युज्यो वा सखा वा |
| ,, ,, ,, ३, १, ८ ममाग्ने वर्चः | १०, १२८, १ ममाग्ने वर्चो विहवेष्वस्तु |
| ,, ,, ,, १५, १२ स्वस्ति नो मिमीताम् २, ६, २ | ५, ५१, ११ स्वस्ति नो मिमीतामश्विना भगः |
| ,, ६, १ अनृक्षराः | १०, ८५, २३ अनृक्षरा ऋजवः सन्तु पन्थाः |
| ,, ,, ६ आ नः प्रजाम् | ,, ,, ४३ आ नः प्रजां जनयतु प्रजापतिः |
| ,, ६, ५ त्वमग्नेः प्रमतिः | |
| ,, ६, ६ यस्येमे हिमवन्तः | ,, १२१, ४ यस्येमे हिमवन्तो महित्वा |
| ,, १२, ३ रैभ्यासीद् | ,, ८५, ६ रैभ्यासीदनुदेयी |
| ,, ,, ,, चित्तिरा उपबर्हणम् | ,, ,, ७ चित्तिरा उपबर्हणम् |
| ,, ,, ४ समञ्जन्तु विश्वे देवाः | ,, ,, ४७ समञ्जन्तु विश्वे देवाः |
| ,, ,, ७ रूपं-रूपम् | ६, ४७, १८ रूपं-रूपं प्रतिरूपो बभूव |
| ,, ,, ८ नीललोहितम् | १०, ८५, २८ नीललोहितं भवति |
| ,, ,, ९ मधुमतीरोषधीः | ४, ५७, ३ मधुमतीरोषधीर्द्याव आपः |
| ,, १३, १ सम्राज्ञी श्वशुरे भव | १०, ८५, ४६ सम्राज्ञी श्वशुरे भव |
| ,, ,, २ गृभ्णामि ते सौभगत्वाय हस्तम् | ,, ,, ३६ गृभ्णामि ते सौभगत्वाय हस्तम् |
| ,, १५, १ प्र त्वा मुञ्चामि | ,, ,, २४ प्र त्वा मुञ्चामि वरुणस्य पाशात् |
| ,, ,, २ जीवं रुदन्ति | ,, ४०, १० जीवं रुदन्ति वि मयन्ते अध्वरे |
| ,, ,, ३ अक्षन्नमीमदन्त | १, ८२, २ अक्षन्नमीमदन्त हि |

* अत्र पादनिर्देशः

| | |
|---|---|
| १, १५, ४ शुची ते चक्रे | १०, ८५, १२ शुची ते चक्रे यात्या |
| ,, ,, ,, द्वे ते चक्रे | ,, ,, १६ द्वे ते चक्रे सूर्ये |
| ,, ,, ६ खे रथस्य | ८, ८०, ७ खे रथस्य खेऽनसः |
| ,, ,, ८ युक्तस्ते अस्तु दक्षिणः | १, ८२, ५ युक्तस्ते अस्तु दक्षिणः |
| ,, ,, ,, शुक्रावनड्वाहौ | १०, ८५, १० शुक्रावनड्वाहावास्ताम् |
| ,, ,, १० अभि व्ययस्व खदिरस्य | ३, ५३, १९ अभि व्ययस्व खदिरस्य सारम् |
| ,, ,, ११ त्वं विदध्वम् | १०, १४३, २ त्वं विदस्वं न वाजिनम् |
| ,, ,, १२ स्वस्ति नो मिमीताम् | ५, ५१, ११ स्वस्ति नो मिमीतामश्विना भगः |
| ,, ,, १३ सुकिंशुकम् | १०, ८५, २० सुकिंशुकं शल्मलिं विश्वरूपम् |
| ,, ,, १४ मा विदन् परिपन्थिनः | ,, ,, ३२ मा विदन् परिपन्थिनः |
| ,, ,, १५ ये वध्वः | ,, ,, ३१ ये वध्वश्चन्द्रं वहतुम् |
| ,, ,, १६; ५, २, ४ वनस्पते शतवल्शः | ३, ८, ११ वनस्पते शतवल्शो वि रोह |
| ,, ,, १७, ४, १५, २२ सुत्रामाणम् | १०, ६३, १० सुत्रामाणं पृथिवीं द्यामनेहसम् |
| ,, ,, १८ अश्मन्वती | ,, ५३, ८ अश्मन्वती रीयते सं रभध्वम् |
| ,, ,, २० उद्व ऊर्मिः | ३, ३३, १३ उद्व ऊर्मिः शम्या हन्तु |
| ,, ,, २२ इह प्रियम् | १०, ८५, २७ इह प्रियं प्रजया ते समृध्यताम् |
| ,, १६, ५ अघोरचक्षुः | ,, ,, ४४ अघोरचक्षुरपतिघ्न्येधि |
| ,, ,, ६ कया नश्चित्रः | ४, ३१, १ कया नश्चित्र आ भुवत् |
| ,, ,, ७ उत त्वा दैव्या भिषजा | ८, १८, ८ उत त्वा दैव्या भिषजा |
| ,, ,, १२ इहैव स्तम् | १०, ८५, ४२ इहैव स्तं मा वि यौष्टम् |
| ,, १७, १, ४, ५, १० दधिक्राव्णो अकारिषम् | ४. ३९, ६ दधिक्राव्णो अकारिषम् |
| ,, १७, ३ ध्रुवैधि पोष्या मयि | १०, ८५, ६ (खिल) |
| ,, ,, ७ पिबतं च तृप्णुत च | ८, ३५.१० पिबतं च तृप्णुतं चा च गच्छतम् |
| ,, १८, ४; २२, ७ प्रजापते | १०, १२१, १० प्रजापते न त्वदेतान्यन्यः |
| ,, १९, १ उदीर्ष्वातः पतिवती | " ८५, २१ उदीर्ष्वातः पतिवती ह्येषा |
| ,, २०, ५ अग्निना रयिम् | १, १, ३ अग्निना रयिमश्नवत् |
| ,, ,, ,, तन्नस्तुरीपम् | ३, ४, ९ तन्नस्तुरीपमध पोषयित्नु |
| ,, ,, ,, समिद्धाग्निर्वनवत् | ५, ३७, २ समिद्धाग्निर्वनवत् स्तीर्णबर्हिः |
| ,, ,, ,, ५, ८, २० पिशङ्गरूपः | २, ३, ९ पिशङ्गरूपः सुभरो वयोधाः |
| ,, २१, २ ब्रह्मणाग्निः संविदानः | १०, १६३, १ ब्रह्मणाग्निः संविदानः |
| ,, ,, ३ अक्षीभ्यां ते नासिकाभ्याम् | " १६२, १ अक्षीभ्यां ते नासिकाभ्याम् |
| ,, २२, ३ नेजमेष परापत | १०, १८४, १ (खिल) |
| ,, २२, १२ विष्णुर्योनिं कल्पयतु | " १८४, १ विष्णुर्योनिं कल्पयतु |

* अत्र पादनिर्देशः

| | |
|---|---|
| १, २२, १२ राकामहम् | २, ३२, ४ राकामहं सुहवां सुष्टुती हुवे |
| ,, २४, ७ त्वं सोम महे भगम् | १, ६१, ७ त्वं सोम महे भगम् |
| ,, ,, ,, यच्चिद्धि | ४, १२, ४ यच्चिद्धि ते पुरुषत्रा यविष्ठा |
| ,, ,, ,, महश्चित् | ४, १२, ५ महश्चिदग्न एनसो अभीके |
| ,, ,, ८ अग्न आयूंषि | ६, ६६, १६ अग्न आयूंषि पवसे |
| ,, ,, ६;३,१,१६;४,१८,५ स्योना पृथिवि भव | १, २२, १५ स्योना पृथिवि भव |
| २, २, १३ गणानां त्वा | २, २३, १ गणानां त्वा गणपतिं हवामहे |
| ,, ,, १४ मा गन्ता मा रिषण्यत | ८, २०, ,, मा गन्ता मा रिषण्यत |
| ,, ५, १२; ७,१६;६,४,८ तत्सवितुर्वरेण्यम् | ३, ६२, १० तत्सवितुर्वरेण्यम् |
| ,, ८, १ सदसस्पतिमद्भुतम् | १, १८, ६ सदसस्पतिमद्भुतम् |
| ,, १२, १६ त्वं तम् | ,, ,, ५ त्वं तं ब्रह्मणस्पते |
| ,, ,, ,, उच्चा दिवि | १०,१०७,२ उच्चा दिवि दक्षिणावन्तो अस्थुः |
| ,, १४, ५ वास्तोष्पते प्रतिजानीह्यस्मान् | ७, ५४, १, वास्तोष्पते प्रतिजानीह्यस्मान् |
| ,, १४, १६ ये देवासः | १, १३६, ११ ये देवासो दिव्येकादश स्थ |
| ,, ,, १८ ये अग्निदग्धाः | १०, १५, १४ ये अग्निदग्धा ये अनग्निदग्धाः |
| ,, ,, २६ मोघमन्नं विन्दते अप्रचेताः | ,, ११७, ६ मोघमन्नं विन्दते अप्रचेताः |
| ३, १, ६ युवं वस्त्राणि | १, १५२, १ युवं वस्त्राणि पीवसा वसाथे |
| ,, ,, ७ आयुष्यं वर्चस्यम् | १०,१२८,२ (खिल) |
| ,, ,, ६ गृहं गृहमहना | ,, १२३, ४ गृहं गृहमहना यात्यच्छा |
| ,, ,, १० मा रोहत | १०, १८, ६ आ रोहतायुर्जरसं वृणाना |
| ,, ,, ११ दीर्घंस्ते अस्त्वङ्कुशः | ८, १७, १० दीर्घस्ते अस्त्वङ्कुशः |
| ,, ,, १३ वनस्पते वीड्वङ्गः | ६, ४७, २६ वनस्पते वीड्वङ्गो हि भूयाः |
| ,, ,, ,, दास इत्था | १०, १५२, १ दास इत्था महाँ असि |
| ४,६,५;६,५,६ दास इत्था महाँ असि | ,, ,, ,, |
| ३, ३, १० उक्षा समुद्रः | ५, ४७, ३ उक्षा समुद्रो अरुषः सुपर्णः |
| ,, ४, ८ वास्तोष्पते | ७, ५४, १ वास्तोष्पते प्रति जानीह्यस्मान् |
| ,, ,, ,, अमीवहा वास्तोष्पते | ,, ५५ ,, अमीवहा वास्तोष्पते |
| ,, ,, ,, वास्तोष्पते ध्रुवा स्थूणा | ८, १७, १४ वास्तोष्पते ध्रुवा स्थूणा |
| ,, ६, ३ अति धन्वामगन्महि | ६, ५१, १६ अति धन्वामगन्महि |
| ,, ८, ६; ५, ५, ११ भद्रं कर्णेभिः | १, ८६, ८ भद्रं कर्णेभिः शृणुयाम देवाः |
| ,, ,, ७; ६, ६, १ तच्चक्षुः | ७, ६६, १६ तच्चक्षुर्देवहितम् |
| ,, ६, १; ११, ५ पूषा गा अन्वेतु नः | ६, ५४, ५ पूषा गा अन्वेतु नः |
| ,, ६, २ परि पूषा | ६, ५४, १० परि पूषा परस्तात् |
| ६, ३ आ गावो अग्मन् | ,, २८, १ आ गावो अग्मन्नुत भद्रमक्रन् |

| | |
|---|---|
| ३, ६, ५; ११, १५* मयोभूर्वातः | १०, १६६, १ मयोभूर्वातो अभि वातूस्राः |
| „ १०, ३, संवत्सरीणं पय उस्रियायाः | „ ८७, १७ संवत्सरीणं पय उस्रियायाः |
| ३, १३, २; ४ ये तातृपुः | १०, १५, ९ ये तातृपुर्देवत्रा जेहमानाः |
| ४, ५, ७ अग्निमीळे पुरोहितम् | १, १, १ अग्निमीळे पुरोहितम् |
| „ „ ८ कुमुम्भकस्तदब्रवीत् | „ १९१, १६ कुषुम्भकस्तदब्रवीत् |
| „ „ „ आवदँस्त्वं शकुने भद्रमा वद | २, ४३, ३ आवदँस्त्वं शकुने भद्रमा वद |
| „ „ „ गृणाना जमदग्निना | ३, ६२, १८ गृणाना जमदग्निना |
| „ „ „ धामन् ते विश्वं भुवनमधि श्रितम् | ४, ५८, ११ धामन् ते विश्वं भुवनमधिश्रितम् |
| „ „ „ गन्ता नो यज्ञं यज्ञियाः सुशमि | ५, ८७, ९ गन्ता नो यज्ञं यज्ञियाः सुशमि |
| „ „ „ यो नः स्वो अरणः | ६, ७५, १९ यो नः स्वो अरणः |
| „ „ „ प्रति चक्ष्व वि चक्ष्व | ७, १०४, २५ प्रति चक्ष्व वि चक्ष्व |
| „ „ „ आऽग्ने याहि मरुत्सखा | ८, १०३, १४ आऽग्ने याहि मरुत्सखा |
| „ „ „ यत्ते राजन् छृतं हविः | ९, ११४, ४ यत्ते राजन् छृतं हविः |
| „ „ ९ तच्छंयोरावृणीमहे | १०, १९१, ५ (खिल) |
| „ ६, ४ उदु त्यं जातवेदसम् | १, ५०, १ उदु त्यं जातवेदसम् |
| „ „ „ चित्रं देवानाम् | „ ११५, १ चित्रं देवानामुदगादनीकम् |
| „ „ „ नमो मित्रस्य | १०, ३७, „ नमो मित्रस्य वरुणस्य चक्षसे |
| „ „ „ सूर्यो नो दिवस्पातु | „ १५८, १ सूर्यो नो दिवस्पातु |
| „ १३, ४, शुनं न फालाः | ४, ५७, ८ शुनं नः फाला वि कृषन्तु भूमिम् |
| „ „ ५ क्षेत्रस्य पतिना | „ „ १ क्षेत्रस्य पतिना वयम् |
| „ १४, ५ समुद्रज्येष्ठाः | ७, ४९, १ समुद्रज्येष्ठाः सलिलस्य मध्यात् |
| „ १७, ५ अप नः शोशुचदघम् | १, ९७, १ अप नः शोशुचदघम् |
| ४, १८, ३ शन्नो मित्रः | १०, ९०, ९, शन्नोमित्रः शंवरुणः |
| „ १८, ४ समुद्रादूर्मिः | ४, ५८, १ समुद्रादूर्मिर्मधुमा उदारत् |
| ४, १८, ११ उदीर्ध्वं जीवः | १, ११३, १६ उदीर्ध्वं जीवः |
| ५, १, ३ अयं ते योनिः | ३, २९, १० अय ते योनिर्ऋत्वियः |
| „ „ ९ त्वमग्ने व्रतपाः | ८, ११, १ त्वमग्ने व्रतपा असि |
| „ २, ४ त्वं नो अग्ने | ४, १, ४ त्वं नो अग्ने वरुणस्य विद्वान् |
| „ „ „ अव ते हेळ. | १, २४, १४ अव ते हेळो वरुण नमोभिः |
| „ „ „ इमं मे वरुण | „ २५, १९ इमं मे वरुण श्रुधी |
| „ „ „ उदुत्तमं वरुण | „ २४, १५ उदुत्तमं वरुण पाशमस्मत् |
| „ „ „ इमा धियं शिक्षमाणस्य | ८, ४२, ३ इमां धियं शिक्षमाणस्य देव |
| „ „ ६ विश्वतश्चक्षु | १०, ८१, ३, विश्वतश्चक्षुरुत विश्वतोमुखः |

* अत्र मयोभूरिति प्रतीकनिर्देशः

| | |
|---|---|
| ,, ,, ,, इदं विष्णुः | १, २२, १७ इदं विष्णुर्वि चक्रमे |
| ,, ,, ७ यत् किञ्चेदम् | ७, ८९, ५, यत् किञ्चेदं वरुण दैव्ये जने |
| ५, ३, ३ यान् वो नरः | ३, ८, ६, यान् वो नरो देवयन्तो निमिम्युः |
| ,, ५, २ देवाः कपोतः | १०, १६५, १ देवाः कपोत इषितो यदिच्छन् |
| ५, ५, १२ शतमिन्नु शरदो अन्ति देवाः | १, ८९, ९ शतमिन्नु शरदो अन्ति देवाः |
| ५, ६, २ इमा रुद्राय तवसे कपर्दिने | १, ११४, १ इमा रुद्राय तवसे कपर्दिने |
| ,, ८, २ पिशङ्गरूपः सुभरो वयोधाः | २, ३, ९ पिशङ्गरूपः सुभरो वयोधाः |
| ,, ८, ५ य ऋते चित् | ८, १, १२ य ऋते चिदभिश्रिषः |
| ,, ,, ६ अप्स्वग्ने | ,, ४३, ९ अप्स्वग्ने सधिष्टव |
| ,, ९, ४ समानो मन्त्रः | १०, १९१, ३ समानो मन्त्रः समितिः समानी |
| ,, १०, २ मा नस्तोके | १, ११४, ८ मा नस्तोके तनये मा न आयौ |
| ,, ,, ३ शन्न इन्द्राग्नी | ७, ३५, १ शन्न इन्द्राग्नी भवतामवोभिः |
| ६, २, ५ आञ्जनगन्धिम् | १०, १४६, ६ आञ्जनगन्धिं सुरभिम् |
| ,, ४, २ युवं सुरामम् | ,, १३१, ४ युवं सुराममश्विना |
| ,, ,, ,, स्वस्ति नः पथ्यासु | ,, ६३, १५ स्वस्ति नः पथ्यासु धन्वसु |
| ,, ,, ४ प्रत्यस्मै पिपीषते | ६, ४२, १ प्रत्यस्मै पिपीषते |
| ,, ,, ,, यो रयिवो रयिन्तमः | ,, ४४, १ यो रयिवो रयिन्तमः |
| ,, ,, ,, त्यमु वो अप्रहणम् | ,, ,, ४ त्यमु वो अप्रहणम् |
| ,, ,, ,, अस्मा-अस्मा इदन्धसः | ,, ४२ ४ अस्मा-अस्मा इदन्धसः |
| ,, ,, ,, एवा ह्यसि वीरयुः | ८, ९२, २८ एवा ह्यसि वीरयुः |
| ,, ,, ८ तत्सवितुर्वृणीमहे | ५, ८२, १ तत्सवितुर्वृणीमहे |
| ,, ५, ६ अप प्राचः | १०, १३१, १, अप प्राच इन्द्र विश्वाँ अमित्रान् |
| ,, ,, ,, इन्द्रश्च मृळयाति नः | २, ४१, ११ इन्द्रश्च मृळयाति नः |
| ,, ,, ,, स्वस्तिदाः | १०, १५२, २ स्वस्तिदा विशस्पतिः |
| ,, ,, ,, वि रक्षः | ,, ,, ३ वि रक्षो वि मृधो जहि |
| ,, ,, ,, वि न इन्द्र | ,, ,, ४ वि न इन्द्र मृधो जहि |
| ,, ,, ,, अपेन्द्र | ,, ,, ५ अपेन्द्र द्विषतो मनः |
| ,, ६, १ सविता पश्चात् | ,, ३६, १४ सविता पश्चात् |

| शांगृ | मासं |
|---|---|
| १, ४, २ हंसः शुचिषत् | १०, २४ हंसः शुचिषद् वसुरन्तरिक्षसत् |
| १, ६, ५ अनाधृष्टमस्यनाधृष्यं देवानामोजोऽनभिशस्त्यभिशस्तिपा अनभिशस्तेन्यम् | ५, ५ अनाधृष्टमस्यनाधृष्यं देवानामोजोऽनभिशस्त्यभिशस्तिपा अनभिशस्तेन्यम् |
| ,, ,, ,, अञ्जसा सत्यमुप गेषम् | ,, ,, अञ्जसा सत्यमुपगेषम् |

| | |
|---|---|
| ,, ॥ ,, सुविते मा धाः | ५, ५ स्विते मा धाः |
| ,, ८, ६ भूर्भुवः स्वः | ३, ३७ भूर्भुवः स्वः |
| १, ८, १६ वैष्णव्यौ | १, १२ पवित्रे स्थो वैष्णव्यौ |
| " " १८ महीनां पयोऽसि | ४, ३ महीनां पयोऽसि |
| " " १६ इषे त्वा | १, १ इषे त्वा |
| १, ८, २० ऊर्जे त्वा | १, १ ऊर्जे त्वा |
| " " २१ सवितुष्ट्वा प्रसवे उत् पुनाम्यच्छिद्रेण पवित्रेण वसो सूर्यस्य रश्मिभि. | १. ३१ सवितुस्त्वा प्रसव उत् पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः |
| " " २४ सवितुर्व. | " १२ सवितुर्वः |
| " ६, ३ विष्णोर्हस्तोऽसि | " ३० विष्णोर्वेष्योऽसि |
| " " ६ यस्येमे हिमवन्त. | २५, १२ यस्येमे हिमवन्तो महित्वा |
| " १३, १२ अभि तिष्ठ पृतन्यत· | ११, २० अभि तिष्ठ पृतन्यतः |
| " " " सहस्व पृतनायत· | १२, ६६ सहस्व पृतनायतः |
| " १५, ३ अक्षन्नमीमदन्त | ३, ५१ अक्षन्नमीमदन्त हि |
| " " १६ वनस्पते शतवल्श· | ५, ४३ अतस्त्वं देव वनस्पते शतवल्शो विरोह |
| " " १७ सुत्रामाणम् | २१, ६, सुत्रामाणं पृथिवीं द्यामनेहसम् |
| १, २२, ७ सुमतिं सत्यधर्मेण | २२, ११ सुमतिं सत्यराधसम् |
| " " १५ सुपर्णोऽसि गुरुत्मान्<br>त्रिवृत्ते शिर·<br>गायत्रं चक्षुः<br>छन्दांस्यङ्गानि<br>यजूंषि नाम<br>साम ते तनू· ॥ | १२, ४ सुपर्णोऽसि गुरुत्मान्<br>त्रिवृत्ते शिरः<br>गायत्रं चक्षुः<br>छन्दांस्यङ्गानि<br>यजूंषि नाम<br>साम ते तनूर्वामदेव्यम् ॥ |
| १, २५, ७ आयुर्दा अग्ने हविषा वृधानो<br>घृतप्रतीको घृतयोनिरेधि<br>घृतं पीत्वा मधु चारु गव्यम्<br>पितेव पुत्रमिह रक्षतादिमम् ॥ | ३५, १७ आयुष्मानग्ने हविषा वृधानो<br>घृतप्रतीको घृतयोनिरेधि ।<br>घृत पीत्वा मधु चारु गव्यम्<br>पितेव पुत्रमभि रक्षतादिमान् ॥ |
| १, २७, ७ अन्नपतेऽन्नस्य नो देहि<br>अनमीवस्य शुष्मिण<br>प्रप्र दातारं तारिष<br>ऊर्जन्नो धेहि द्विपदे चतुष्पदे ॥ | ११, ८३ अन्नपतेऽन्नस्य नो देहि<br>अनमीवस्य शुष्मिण. ।<br>प्रप्र दातारं तारिष<br>ऊर्जन्नो धेहि द्विपदे चतुष्पदे ॥ |
| १, २७, ८ अग्न आयूंषि | १६, ३८ अग्न आयूंषि पवसे |
| " " ६ स्योना पृथिवि भव | ३५, २१ स्योना पृथिवि नो भव |
| " २८, " त्र्यायुषं जमदग्ने. | ३, ६२ त्र्यायुषं जमदग्नेः |

| | |
|---|---|
| १, २८, ६ कश्यपस्य त्र्यायुषम् ।<br>यद्देवानां त्र्यायुषं<br>तत्ते करोमि त्र्यायुषम् ॥ | ३, ६२ कश्यपस्य त्र्यायुषम्<br>यद्देवेषु त्र्यायुषम्<br>तन्नो अस्तु त्र्यायुषम् ॥ |
| १, २८, १२ ओषधे त्रायस्व | ४, १ ओषधे त्रायस्व |
| " " १४ स्वधितिष्टे पिता | ३, ६३ स्वधितिस्ते पिता |
| " " " मैनं हिंसीः | " " मा मा हिंसीः |
| २, २, ४ को नामासि | ७, २९ को नामासि |
| " ४, ६ एषा ते अग्ने समित् | २, १४ एषा ते अग्ने समित् तया वर्धस्व चा<br>च प्यायस्व |
| " १०, ४ एषा ते अग्ने समित् तया वर्धस्व<br>चा च प्यायस्व । | " " " " " |
| " ७, १९ तत्सवितुर्वरेण्यम् | ३, ३५ तत्सवितुर्वरेण्यम् |
| २, १०, ४ एधोऽस्य् एधिषीमहि<br>समिदसि<br>तेजोऽसि<br>तेजो मयि धेहि स्वाहा<br>वर्धिषीमहि च वयमा च प्यासि-<br>षीमहि स्वाहा | २०, २३ एधोऽस्य् एधिषीमहि<br>समिदसि<br>तेजोऽसि<br>तेजो मयि देहि ।<br>२, १४ वर्धिषीमहि च वयमा च प्यायिषी-<br>महि स्वाहा |
| २, १३, ५ त्वमग्ने व्रतभृच् छुचिर् अग्ने देवाँ<br>इहाऽऽवह<br>उप यज्ञं हविश्च नः | १७, ९ स नः पावक दीदिवोऽग्ने देवाँ<br>इहाऽऽवह<br>उप यज्ञं हविश्च नः । |
| " १४, ४ अग्नये स्वाहा, सोमाय स्वाहा,<br>विश्वेभ्यो देवेभ्यः स्वाहा | २२, २७; २८ अग्नये स्वाहा, सोमाय स्वाहा<br>विश्वेभ्यो देवेभ्यः स्वाहा |
| ३, १, ७ आयुष्यं वर्चस्यम् | ३४, ५० आयुष्यं वर्चस्यम् |
| " २, २ कोऽसि कस्यासि | ७, २९ कोऽसि कस्यासि |
| " ३, १ उपहूता इह गाव उपहूता अजावयः ।<br>अथो अन्नस्य कीलाल उपहूतो गृहेषु नः | ३, ४३ उपहूता इह गाव उपहूता अजावयः ।<br>अथो अन्नस्य कीलाल उपहूतो गृहेषु नः ॥ |
| " " ३ सत्यं च श्रद्धा च | १८, ५ सत्यं च मे श्रद्धा च मे |
| " ७, २ गृहा मा बिभीत मा वेपध्वमूर्जं<br>बिभ्रत एमसि ।<br>ऊर्जं बिभ्रद्वः सुमनाः सुमेधा<br>गृहानैमि मनसा मोदमानः । | ३, ४१ गृहा मा बिभीत म वेपध्वमूर्जं<br>बिभ्रत एमसि ।<br>ऊर्जं बिभ्रद्वः सुमनाः सुमेधा<br>गृहानैमि मनसा मोदमानः । |

| | |
|---|---|
| ३, ७, २ येषामध्येति प्रवसन्येषु सौमनसो बहुः<br>गृहानुप ह्वयामहे ते नो जानन्तु जानतः। | ३, ४२ येषामध्येति प्रवसन्वेषु सौमनसो बहुः<br>गृहानुप ह्वयामहे ते नो जानन्तु जानतः। |
| ,, ११, ४ इह रतिरिह रमध्वं स्वाहा इह<br>धृतिरिह स्वधृतिः स्वाहा उपसृज<br>धरुणं मात्रे धरुणो मातरं धयन्।<br>रायस्पोषमस्मासु दीधरत्॥ | ८, ५१ इह रतिरिह रमध्वमिह धृतिरिह<br>स्वधृतिः स्वाहा । उपसृजन् धरुणं<br>मात्रे धरुणो मातरं धयन्।<br>रायस्पोषमस्मासु दीधरत् |
| ,, ,, १४ रायस्पोषेण समिषा मदेम स्वाहा[a] | ११, ७५ रायस्पोषेण समिषा मदन्त.[a]। |
| ,, १३, ३ वह वपां जातवेदः पितृभ्यो<br>यत्रैनान् वेत्थ सुकृतस्य लोके<br>मेदसः कुल्या उप तान्स्रवन्तु<br>सत्याः सन्तु यजमानस्य कामाः स्वाहा। | ३५, २० वह वपां जातवेदः पितृभ्यो<br>यत्रैनान्वेत्थ निहितान् पराके<br>मेदसः कुल्या उप तान् स्रवन्तु<br>सत्या एषामाशिषः सं नमन्तां स्वाहा |
| ४, ५, ८ धामन्ते विश्वं भुवनमधि श्रितम् | १७, ९९ धामन्ते विश्वं भुवनमधि श्रितम्[a] |
| ,, १३, ३ नमो द्यावापृथिवीभ्याम् | ५, ७ नमो द्यावापृथिवीभ्याम् |
| ,, १७, ८ प्रत्यश्वेषु प्रति तिष्ठामि गोषु | २०, १० प्रत्यंगेषु प्रति तिष्ठामि गोषु |
| ५, ४, २ अग्नये वैश्वानराय स्वाहा | ११, ६६ अग्नये वैश्वानराय स्वाहा |
| ,, ६, ४ ये समानाः समनसः पितरो यमराज्ये<br>तेषां लोकः स्वधा नमो यज्ञो यज्ञेषु<br>कल्पताम्॥<br>ये समानाः समनसो जीवा जीवेषु<br>मामका.<br>तेषां श्रीर्मयि कल्पतामस्मिल्लोके शतं<br>समाः॥ | १९, ४५-४६ ये समानाः समनसो पितरो<br>यमराज्ये तेषांल्लोकाः स्वधा नमो<br>यज्ञो यज्ञेषु कल्पताम्॥<br>ये समानाः समनसो जीवा जीवेषु<br>मामकाः।<br>तेषां श्रीर्मयि कल्पतामस्मिल्लोके शतं<br>समाः॥ |
| ६, ६, ६ काण्डात् काण्डात् प्ररोहन्ति | १३, २० काण्डात्-काण्डात् प्ररोहन्ती |
| **शांगृ** | **काण्वसं** |
| १, २८, १५ येन धाता बृहस्पतिः | ३, ६, २ येन धाता बृहस्पतेः |
| २, १०, ४ समिद्धो मा समर्द्धय | ३, ३, २८ समिधो मा समर्द्धय |
| **शांगृ** | **तैसं** |
| १, ४, २ हंसः शुचिषत् | १, ८, १५, २ हंसः शुचिषद्वसुरन्तरिक्षसत् |
| ,, ६, ५ अनाधृष्टमस्यनाधृष्यं देवानामोजोऽन-<br>भिशस्त्यभिशस्तिपा अनभिशस्तेन्यम्<br>अञ्जसा सत्यमुप गेषम्<br>सुविते मा धाः | ,, २, १०, ,, अनाधृष्टमस्यनाधृष्यं देवानामो-<br>जोऽभिशस्तिपा अनभिशस्तेन्यम्।<br>अञ्जसा सत्यमुप गेषम्<br>सुविते मा धाः |

| | |
|---|---|
| १, ८, १८ महीनां पयोऽसि | १, २, १, १ महीनां पयोऽसि |
| " १३, १२ अभि तिष्ठ पृतन्यतः | ४, १, २, ३ अभि तिष्ठ पृतन्यतः |
| " १५, १६ वनस्पते शतवल्शः | १, ३, ५, १ वनस्पते शतवल्शो वि रोह |
| " २०, ५ अग्निना रयिम् अश्नवत् | ३, १, ११, १ अग्निना रयिम् अश्नवत् |
| " २२, [illegible] धाता ददातु दाशुषे<br>प्राची जीवातुमक्षितिम्<br>वयं देवस्य धीमहि<br>सुमतिं सत्यधर्मणः ॥ | ३, ३, ११, ३ धाता ददातु नो रयिम्<br>प्राची जीवातुमक्षिताम्<br>वयं देवस्य धीमहि<br>सुमतिं सत्यराधसः ॥ |
| १, २२, [illegible] धाता प्रजाया उत राय ईशे<br>धातेदं विश्वं भुवनं जजान<br>धाता पुत्रं यजमानाय दाता<br>तस्मा उ हव्यं घृतवज्जुहोत ॥ | ३, ३, ११, २ धाता प्रजाया उत राय ईशे<br>धातेदं विश्वं भुवनं जजान ।<br>धाता पुत्रं यजमानाय दाता<br>तस्मा उ हव्यं घृतद्विधेम ॥ |
| १, २२, १२ राकामहम् | ३, ३, ११, ५ राकामहं सुहवां सुष्टुती हुवे |
| " " १५ सुपर्णोऽसि गरुत्मान्<br>त्रिवृत्ते शिरः<br>गायत्रं चक्षुः<br>छन्दांस्यङ्गानि<br>यजूंषि नाम<br>साम ते तनूः ॥ | ४, १, १०, ५ सुपर्णोऽसि गरुत्मान्<br>त्रिवृत्ते शिरः<br>गायत्रं चक्षुः<br>छन्दांस्यङ्गानि<br>यजूंषि नाम<br>साम ते तनूर्वामदेव्यम् ॥ |
| " २५, ७ आयुष्टे अद्य गीर्भिर-<br>यमग्निर्वरेण्यः | १, ३, १४, ४ आयुष्टे विश्वतो दधद्<br>अयमग्निर्वरेण्यः |
| " " " आयुर्दा अग्ने हविषा वृधानो<br>घृतप्रतीको घृतयोनिरेधि<br>घृतं पीत्वा मधु चारु गव्यं<br>पितेव पुत्रमिह रक्षतादिमम् ॥ | " " " " आयुर्दा अग्ने हविषो जुषाणो<br>घृतप्रतीको घृतयोनिरेधि<br>घृतं पीत्वा मधु चारु गव्यं<br>पितेव पुत्रमभि रक्षतादिमम् ॥ |
| १, २७, ७ अन्नपतेऽन्नस्य नो देह्य-<br>नमीवस्य शुष्मिणः<br>प्र-प्र दातारं तारिष<br>ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥ | ४, २, ३, १ अन्नपतेऽन्नस्य नो देह्य-<br>नमीवस्य शुष्मिणः<br>प्र प्र-दातारं तारिष<br>ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥ |
| इममग्न आयुषे वर्चसे<br>तिग्ममोजो वरुण सोम राजन्<br>मातेवास्मा अदितिः शर्म यंसत् | २, ३, १०, ३ इममग्न आयुषे वर्चसे कृधि<br>प्रियं रेतो वरुण सोम राजन्<br>मातेवास्मा अदिते शर्म यच्छ |

| | |
|---|---|
| विश्वे देवा जरदष्टिर्यथासत् ॥ | विश्वे देवा जरदष्टिर्यथाऽसत् |
| १, २८, ८ संपृच्यध्वमृतावरीर् | १, १, ३, १ संपृच्यध्वमृतावरीर् |
| ऊर्मिणा मधुमत्तमाः । | ऊर्मिणीर्मधुमत्तमाः |
| पृञ्चतीर्मधुना पयो | ................ |
| मन्द्रा धनस्य सातये ॥ | मन्द्रा धनस्य सातये ॥ |
| " " ६ आप उन्दन्तु जीवसे | " २, १, " आप उन्दन्तु जीवसे |
| दीर्घायुत्वाय वर्चसे । | दीर्घायुत्वाय वर्चसे । |
| " " १२ ओषधे त्रायस्व | " " " " ओषधे त्रायस्व । |
| २, ३, २ ऐन्द्रीमावृतमावर्ते | १, ६, ६, २ ऐन्द्रीमावृतमन्वावर्ते |
| " ४, ५ मा दिवा सुषुप्थाः | ४, १, " ३ ऊर्ध्वा तिष्ठ ध्रुवा त्वम् |
| " ७, १६ तत्सवितुर्वरेण्यम् | १, ५, ६, ४ तत्सवितुर्वरेण्यम् |
| " १०, ४ एधोऽस्येधिषीमहि | १, ४, ४५, ३ एधोऽस्येधिषीमहि |
| समिदसि तेजोऽसि | समिदसि तेजोऽसि |
| तेजो मयि धेहि स्वाहा । | तेजो मयि धेहि स्वाहा ॥ |
| २, १३, ५ उप यज्ञं हविश्च नः | १, ३, १४, ८ उप यज्ञं हविश्च नः |
| ३, ३, ३ सत्यं च श्रद्धा च | ४, ७, २, १ सत्यं च मे श्रद्धा मे |
| " ६, ३ अपि पन्थामगन्महि | १, २, ६, १ अपि पन्थामगस्महि |
| " ८, ३ भद्रान्नः श्रेयः समनैष्ट देवास् | ५, ७, २, ४ भद्रान्नः श्रेयः समनैष्ट देवास् |
| त्वया ज्वसेन (?) समशीमहि त्वा | त्वयाऽवसेन समशीमहि त्वा । |
| स नो मयोभूः पितवा विशस्व | स नो मयोभूः पितो आ विशस्व |
| शन्नो भव द्विपदे शं चतुष्पदे । | शं तोकाय तनुवे स्योनः |
| " ११, ५ पूषा गा अन्वेतु नः | ४, १, ११, २ पूषा गा अन्वेतु नः |
| " १२, ३ इयमेव सा या प्रथमा व्युच्छद् | " ३, " १ इयमेव सा या प्रथमा व्यौच्छद् |
| अन्तरस्यां चरति प्रविष्टा | अन्तरस्यां चरति प्रविष्टा |
| वधूर्जजान नवकृज्जनित्री | वधूर्जजान नवगज्जनित्री |
| त्रय एनां महिमानः सचन्ता स्वाहा ॥ | त्रय एनां महिमानः सचन्ते स्वाहा ॥ |
| " ११, १४ एतं युवानं पति वो ददामि | ३, ३, ६, १ एतं युवानं परि वो ददामि |
| तेन क्रीडन्तीश्चरथ प्रियेण | तेन क्रीडन्तीश्चरत प्रियेण |
| मावश्वात्र (?) जनुषा संविदाना | मा नः शाप्त जनुषा सुभागा |
| रायस्पोषेण समिषा मदेम स्वाहा ॥ | रायस्पोषेण समिषा मदेम ॥ |
| ४, ५, ६ तच्छंयोरा वृणीमहे | २, ६, १०, २ तच्छंयोरा वृणीमहे |
| " १५, २ विष्णवे स्वाहा | ७, ३, १५, १ विष्णवे स्वाहा |

| | |
|---|---|
| ४, १८, १ ग्रीष्मो हेमन्त उत वा वसन्तः<br>शरद्वर्षाः सुकृतन्नो अस्तु ।<br>तेषामृतूनां शतशारदानां<br>निवात एषामभये स्याम स्वाहा ॥ | ५, ७, २, ४ ग्रीष्मो हेमन्त उत नो वसन्तः<br>शरद्वर्षाः सुवितं नो अस्तु<br>तेषामृतूनां शतशारदानां<br>निवात एषामभये स्याम स्वाहा ॥ |
| ५, ४, २ अग्नये वैश्वानराय स्वाहा | ४, १, ९, १ अग्नये वैश्वानराय स्वाहा |
| ५, ८, २ पिशङ्गरूपः सुभरो वयोधाः | ३, १, ११, २ पिशङ्गरूपः सुभरो वयोधाः |
| ६, ४, २ दीक्षे मा मा हिंसीः | " " १, २ दीक्षे मा हासीः |
| „ ५, ६ वि रक्षः | १, ६, १२, ५ वि शत्रून् वि मृधो नुद |
| शांगृ० | मैसं० |
| १, ४, २ हंसः शुचिषद् | २, " " हंसः शुचिषद्वसुरन्तरिक्षसद् |
| " " " यो मे राजन् | ४, १४, ६ यो मे राजन् युज्यो वा सखा वा |
| " ६, ५ अनाधृष्टमस्यनाधृष्यं<br>देवानामोजोऽनभिशस्त्यभिशस्तिपा<br>अनभिशस्तेन्यम् | १, २, ७ अनाधृष्टमस्यनाधृष्यं देवानामोजः ।<br>अभिशस्तिपा अनभिशस्तेन्यम् ॥ |
| " " " अञ्जसा सत्यमुपगेयम् | १, २, ७ अञ्जसा सत्यमुपगाम् |
| " " " सुविते मा धाः | " " " सुविते मा धाः |
| " ९, ६ यस्येमे हिमवन्तः | २, १३, २३ यस्येमे विश्वे गिरयो महित्वा |
| " १३, १२ अभि तिष्ठ पृतन्यतः<br>सहस्व पृतनायतः | २, ७, २ अभितिष्ठ पृतन्यतः<br>१, १, ११ सहस्व पृतनायतः |
| " १५, १६ वनस्पते शतवल्शः | १, २, १४ वनस्पते शतवल्शो वि रोह |
| " १७, ८ अग्नये स्वाहा | ४, १०, ३ अग्नि स्वाहा |
| " २०, ५ अग्निना रयिम् | " " ४ अग्निना रयिमश्नवत् |
| " २२, ७ धाता ददातु दाशुषे<br>प्राचीं जीवातुमक्षितिम्<br>वयं देवस्य धीमहि<br>सुमतिं सत्यराधसः ॥ | " १२, ६ धाता ददातु नो रयिं<br>प्राची जीवातुमक्षिताम्<br>वयं देवस्य धीमहि<br>सुमतिं सत्यराधसः ॥ |
| " " १२ राकामहम् | " " " राकामहं सुहवां सुष्टुती हुवे |
| " " १५ सुपर्णोऽसि गरुत्मान्<br>त्रिवृत्ते शिरः<br>गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ<br>स्तोम आत्मा ।<br>छन्दांस्यङ्गानि | २, ७, ८ सुपर्णोऽसि गरुत्मान्<br>त्रिवृत्ते शिरः<br>गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ<br>स्तोम आत्मा<br>२, ७, ८ छन्दांस्यङ्गानि |

